SRI HARIKṚIṢNA NIBANDHA MAṆI MÂLÂ

NO. 5.



THE

# KARIKAVALI

WITH

# SĪDDHĀNTA MUKTĀVALI

OF

SRI VIS'WANĀTH PANCHANAN
BHATTĀCHĀRYA.



**EDITED WITH THE "MAYUKHA" COMMENTARY**

By

NYAYA VYAKARANACHARYA

PANDIT S'RĪ SURYANĀRAYANA S'UKLA

Professor Govt. Sanskrit College, Benares.

**( Part 1 )**

( ...YAKṢA KHANDA )



...UBLISHE... Y
...ishna Nibandh Bhawan
**BENARES.**

Second Edition ] [ 1932.

## परीक्षापाठ्य-पुस्तक-सूचीपत्रम् ।

| | | |
|---|---|---|
| (१) | सरलत्रिकोणमिति-चापीयत्रिकोणगणिते—सविशेषवासना-सहिते-द्वियुकपदसिद्धान्त-लघुरिक्थादि-नवीनसिद्धान्तप्रश्नादिसहिते | रु० आ० ३—[illegible] |
| (२) | नीलाम्बरीयगोलीयरेखागणितम्—नूतनवासनया, गोलबोधेन च समन्वितम् | ०—१२ |
| (३) | मुहूर्तचिन्तामणिः—पीयूषधारासहितः-नूतनगणितविषयोपपत्त्यादि टिप्पणीसहितः | ३—० |
| (४) | मुहूर्तचिन्तामणिः-प्रमिताक्षरासहितः-नवीनगणितविषयोपपत्त्यादि टिप्पणीसहितः | १—१२ |
| (५) | बृहज्जातकम्-भट्टोत्पलीयटीकासहितम् नवीनगणितविषयोपपत्त्यादि टिप्पणीसहितम् | २—० |
| (६) | ताजिकनीलकण्ठी—विश्वनाथीयटीकोदाहरणसहिता—गणितविषयोपपत्त्यादिटिप्पणीविभूषिता | १—४ |
| (७) | शिशुबोधः-सविशेषटिप्पणीसहितः | ०—३ |
| (८) | रेखागणितस्यैकादश-द्वादशाध्यायौ—ज्योतिर्विद्वर-श्रीकृष्णदत्तशर्मकृतटीकासहितौ सविशेषटिप्पणीसमलंकृतौ | ०—१२ |
| (९) | नाडिवृत्तपञ्चविंशतिका | ०—१ |
| (१०) | प्रतिभाबोधकम्—संस्कृतटीकासहितम् | ०—८ |
| (११) | मूलरामायणम्—( सुधानाम्निव्याख्यासहितम् ) अन्वय-व्याख्या-समास व्याकरण-वाच्यपरिवर्तन-कोश-सारार्थ-भाषार्थ-प्रश्नादिसहितम् | ०—६ |
| (१२) | मुद्राराक्षसनाटकम्-भावबोधिनीटीका-विस्तृतसमालोचनासहितम् | [illegible]—० |
| | ...तः सर्गद्वयात्मकम् | ०—८ |
| | ...तः सर्गत्रयात्मकम् | ०—१२ |
| | ...यान्तो प्रथमो भागः ) | २—० |
| | ...कृदन्तान्तो द्वितीयो भागः) | २—० |
| | ...:—( सटीकः ) | ०—१२ |
| | ...कासहितः | १—८ |
| | ...टिप्पणीयुतः | ०—८ |
| | ...विवृत्तियुतम् | १—० |
| | ...-( रेशमी गुटका ) | ०—१२ |
| | ...पकोशैकाक्षरकोशैश्च सहितः | ०—९ |
| | | ०—१ |
| | ...ावती-वासना-परिशिष्टप्रश्नादि- | २—८ |
| | ...चित-मयूखोद्भासितसिद्धान्त- ०—१० | संपूर्ण १—४ |
| | ...चिता । पं० श्रीबद्रीनाथ- | १—४ |
| | ...शुबोधिनीसमाख्यव्याख्यया, ...तः । | ०—६ |
| | ...था परीक्षोपयोगिविरलाव्या- | ०—६ |

...यभवनम्-बनारस-सिटी ।

श्री ह रि कृ ष्ण नि ब न्ध म णि मा ला याः

पञ्चमो (५) मणिः ।

श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचिता

# कारिकावली

काशीस्थ राजकीय पाठशाला न्यायशास्त्राध्यापक साहित्योपाध्याय न्यायव्याकरणाचार्य श्री-सूर्यनारायणशुक्लरचित मयूखोल्लासित सिद्धान्तमुक्तावलीसाहिता ।

तस्याः

( प्रत्यक्षखण्डान्तः प्रथमो भागः )

प्रकाशकः—

श्रीहरिकृष्णनिबन्धभवनम्,

बनारस सिटी ।

द्वितीयावृत्तिः ।

सं० १९८८

## लघुसिद्धान्तकौमुदी

### संक्षिप्तबालबोधिनी टीका सहिता ।

प्रथमापरीक्षोपयोगि "संक्षिप्तबालबोधिनी" टीका-( वार्त्तिकपाठ-धातुपाठ-गण-पाठ-सूत्रानुक्रमणिका-पाणिनीयशिक्षा सहित ) इस लघुकौमुदी में सूत्र बड़े टाईप में स्वतन्त्र पङ्क्ति में तथा वृत्ति पृथक् उसके नीचे दूसरे पङ्क्ति में छापी गई है। यह परीक्षोपयोगि संक्षिप्तबालबोधिनी टीका विद्यार्थियों के। बड़े उपयोग की हुई है।
मूल्य लागत मात्र सजिल्द उत्तम संस्करण ।॥) मध्य मसंस्करण ॥=)

## सारस्वतम्

इसमें भी लघुकौमुदी के अनुसार सूत्र स्वतन्त्र टाईपमें तथा वृत्ति पृथक् पङ्क्ति में छापी गई है तथा समस्त कठिन २ स्थलों पर पं० नरहरिशास्त्रीजीकृत परीक्षोपयोगि संक्षिप्तबालबोधिनी टीका विद्यार्थियों के बडे उपयोग की हुई है। साथ में १९ वर्षों के परीक्षा के प्रश्न पत्र भी छपे हैं तथा ग्रन्थ समाप्ति में सारस्वतकी संपूर्ण अष्टाध्याई भी छपी है इतने उपयोगि विषय सहित अत्युत्तम संस्करण का मूल्य ।=) लागत मात्र

## सिद्धान्तचन्द्रिका ।

### संक्षिप्तबालबोधिनी टीका सहिता ।

प्रथमापरीक्षोपयोगि "संक्षिप्तबालबोधिनी" टीका सहित इसमें भी लघुकौमुदी के अनुसार सूत्र स्वतन्त्र मोटे अक्षरों में तथा वृत्ति पृथक् पङ्क्ति में छपी है। इसकी भी संक्षिप्तबालबोधिनी टीका विद्यार्थियों के बड़े उपयोग की हुई है। मूल्य ॥।) है। इसका केवल उत्तरार्द्धभाग पृथक् भी मिलता है। मूल्य ॥)



## तर्कसंग्रहः

### न्यायबोधिनी-पदकृत्य-विरलाटीकात्रयोपेतम् ।

प्रथमापरीक्षोपयोगि न्यायबोधिनी-पदकृत्यटीका तथा न्यायाचार्य काव्यतीर्थ पं० ढुण्ढिराजशास्त्रीकृत विरला टीका टिप्पणा सहित। मूलग्रन्थ तथा न्यायबोधिनी-पदकृत्य-टीका के समस्त कठिनस्थलों पर विरला टीका विद्यार्थियों के बड़े उपयोग की हुई है। ३ टीका सहित अत्युत्तम संस्करण का मूल्य लागत मात्र ।=)

प्राप्तिस्थानम्—

**श्रीहरिकृष्णनिबन्धभवनम्,**

बनारस सिटी ।

श्रीहरिः शरणम् ।

# व्याख्यातुर्निवेदनम् ।

विदितचरमिदं समेषां विदुषां यत्संस्कृतसाहित्यपरिशीलिनां शास्त्रतत्त्वालोकाय कीदृशीमावश्यकतामावहति तर्कशास्त्रम् । यतोऽद्यत्वे सर्वाण्यपि दर्शनानि किम्वा व्याकरणालङ्कारादिशास्त्राण्यपि नव्यतार्किकरीतिमनुसृत्यैव प्रधानविद्याकेन्द्रेषु काश्यादिषु पाठ्यन्ते अतः 'समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना' इत्यस्योपमेयकोटौ तर्कशास्त्रप्रक्षेपो नातिशयोक्तिमालम्बते ।

अतस्तर्कशास्त्रस्य सर्वोपादेयतामाकलय्य तर्कशास्त्रमधिजिगांसूनां कृते महामहोपाध्यायविश्वनाथपञ्चाननभट्टाचार्यमहोदयैर्न्यायसिद्धान्तामुक्तावलीनामा रुचिरो ग्रन्थो निरमीयत ।

अयं च महामहोपाध्यायविश्वनाथपञ्चाननभट्टाचार्यः रत्नाकरविद्यावाचस्पतेः पौत्रः विद्यानिवासभट्टाचार्यस्य पुत्रः रुद्रन्यायवाचस्पतेः नारायणभट्टाचार्यस्य च भ्राता १५५६ शालिवाहनशके वङ्गदेशे प्रख्याततार्किको बभूव ।

एतस्यैव ज्येष्ठपितृव्यो वासुदेवसार्वभौम आसीद्यस्य शिष्यास्तत्त्वचिन्तामणिदीधितिकारो रघुनाथतार्किकशिरोमणिः, स्मृतितत्त्वस्य कर्ता महामहोपाध्यायरघुनन्दनभट्टाचार्यः श्रीगौराङ्गमहाप्रभुः, तान्त्रिक कृष्णानन्दश्च, बभूवुः ।

श्रीविश्वनाथपञ्चाननभट्टाचार्यकृता ग्रन्थास्त्विमे—

१ भाषापरिच्छेदः ( कारिकावली )

२ न्यायसिद्धान्तमुक्तावली ( भाषापरिच्छेदटीका )

३ मांसतत्त्वविवेकः

४ न्यायसूत्रवृत्तिः ( वृन्दावनेऽनेन लिखिता )

५ सर्वार्थतत्त्वालोकः

६ न्यायतन्त्रबोधिनी

७ पिङ्गलप्रकाशश्च

एषु आदिमाश्चत्वारो ग्रन्था मुद्रिता इदानीमुपलभ्यन्ते इति ।

इदं सर्वं वाराणसेयसरस्वतीभवनप्रकाशितमांसतत्त्वविवेकस्य भूमिकायां सुगृहीतनामधेयाः वाराणसेयराजकीयसंस्कृतमहाविद्यालयाध्यक्षाः प्राच्यप्रतीच्योभयदर्शननिष्णाताः कविराज श्रीगोपीनाथमहोदया न्यरूपयन्निति विरम्यते लेखविस्तरादिति ।

सा च न्यायसिद्धान्तमुक्तावली अतिसरलया सरण्या निर्मिता बह्वर्थप्रकाशकाऽपि अतिसंक्षिप्ततया व्याख्यानमपेक्षत एव । यद्यपि दिनकरीनामकं व्याख्यानं बहुत्र मुद्रितं सर्वत्रलब्धप्रचारं समुपलभ्यते तथापि तत्प्रौढतार्किकाणामेव मोदावहम् । व्याख्यानान्तराणि चातिसंक्षिप्तानीति न छात्राणां तार्किकविषयव्युत्पादका-

नीति मया मुक्तावलीमयूखनाम्नी टीका निर्माय अस्मत्प्रियमित्राय श्रीमते बाबूः हरिकृष्णदासगुप्ताय प्रादीयत तेन च स्वधनव्ययेनानीयत प्रकाशं प्रकाशिता च यदि छात्राणां कश्चिदप्युपकारमादध्यात्तदाहमात्मानं कृतकृत्यं मन्वानो भवतामीदृशीमुदारतां शिरसा बिभ्रियाम् ।

येभ्यो हिन्दुविश्वविद्यालयसाहित्यशास्त्रप्रधानाध्यापकेभ्यो व्याकरणसाहित्याचार्यश्रीचन्द्रधरशर्मपाण्डेयेभ्यः, श्रीतर्कवागीशब्रह्मचारिश्रीश्रीदत्तशर्मपाण्डेयेभ्यः विशिष्टाद्वैतसम्प्रदायाचार्येभ्यः सर्वतन्त्रापरतन्त्रेभ्यः श्रीमाधवाचार्येभ्यः, पूर्वोत्तरमीमांसाभूषणपण्डितरत्नदेवशिखामणिश्रीरामानुजाचार्यमहोदयेभ्यः महामहोपाध्यायन्यायाचार्यश्रीवामाचरणभट्टाचार्यमहोदयेभ्यश्च, अधीत्य आत्मानं कृतकृत्यं मन्ये तान् सर्वानपि गुरुवरान् साञ्जलिबन्धं सप्रणिपातं प्रणम्य तेषामुपकारजातं शिरसा बिभर्मि ।

यत्रायोध्यास्थराजगोपालपाठशालायामधीत्य व्याकरणादिशास्त्राणि, चतुर्विंशतिवर्षमिते वयसि वर्तमानेन मया प्रधानाध्यापकपदेऽवस्थाय सुचिरमध्यापितानि तदध्यक्षाणां वैष्णवकुलभूषणानां सर्वप्रकारेण मयि वत्सलां दृष्टिमादधतां मदभ्युन्नतिकारणानां श्रीमहन्थरामदासमहोदयानां चरणकमलयोः सप्रणिपातं प्रणम्य आजन्म तदुपकारजातं स्मरन् केवलं तदीयोऽहमित्युक्त्यैवात्मानं बहु मन्ये ।

श्रीमतां वाराणसेय जो० म० गोयनकासंस्कृतमहाविद्यालयाध्यक्षाणां सर्वतन्त्रस्वतन्त्राणां श्री० पं० चण्डीप्रसादशुक्लमहोदयानां सुतनिर्विशेषं मयि वत्सलां दृष्टिमादधतामुपकारजातं वचसा वक्तुमशक्तः केवलं प्रणामैरेवात्मानं कृतार्थयामि ।

एतद्ग्रन्थप्रकाशकं श्रीमन्तं श्रेष्ठिप्रवरं श्रीहरिकृष्णदासगुप्तमहोदयं शुभाशीर्भियुञ्जन् श्रीविश्वनाथचरणकमलयोः पुष्परूपेण ग्रन्थमिमं समर्पयामीति ।

विदुषामनुचरस्य

**सूर्यनारायणशर्मशुक्लस्य ।**

## द्वितीयसंस्करणे किञ्चिद्वक्तव्यम् ।

अयि माननीया विद्वांसश्छात्राश्च परमं प्रमोदस्थानमिदं यद् षडशीत्यधिकैकोनविंशतिशततमवैक्रमवत्सरे मुद्रितस्य मुक्तावलीमयूखस्य वर्षद्वयेनैव विक्रयात् पुनर्द्वितीयं संस्करणं भवतां पुरत उपस्थाप्यते इति । अस्मिन् संस्करणे द्वित्रस्थलेषु अपेक्षिता विषयाः संनिवेशिताः । मन्यामहे यदनेन संस्करणेन भवन्तोऽत्यन्तं प्रसन्ना भविष्यन्तीति भवन्त एव प्रमाणम् ।

भवतां सेवकः

**श्रीहरिकृष्णनिबन्धभवनम्,**

बनारस सिटी ।

॥ श्रीगणेशाय नमः ॥

# मयूखसहितमुक्तावलीसमेता

# कारिकावली ।

नूतनजलधररुचये गोपवधूटीदुकूलचौराय ।

तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय ॥ १ ॥

## न्यायसिद्धान्तमुक्तावली ।

चूडामणीकृतविधुर्वलयीकृतवासुकिः ।

भवो भवतु भव्याय लीलाताण्डवपण्डितः ॥ १ ॥

## मुक्तावलीमयूखः ।

माहेश्वरं धनुरुदस्य विकृष्य दूरं संचूर्णयन् प्रमुदितो मुनिनाऽभिदृष्टः ॥

शालीनया जनककन्यकया स तिर्यग्दृष्ट्या विलोकितवपू रघुनायकोऽव्यात् ॥ १ ॥

श्रीविश्वनाथ ! विषमं चरितं त्वदीयं दृष्ट्वा परां न घृणया इति शङ्किताऽस्मि ॥

इत्थं निशम्य वचनं गिरिशो भवान्या अङ्गीभवन्प्रमुदितो भवतान्मुदे नः ॥ २ ॥

श्रीदत्तवामाचरणन्यायाचार्यपदाम्बुजम् ।

नत्वा मयूखं तनुते सूर्यनारायणः सुधीः ॥ ३ ॥

चूडामणीकृतेति । न चूडामणिरचूडामणिः, अचूडामणिश्चूडामणिः संपद्यमानस्तथा कृत इति चूडामणीकृतो विधुर्येन स चूडामणीकृतविधुः अवलयो वलयः संपद्यमानस्तथा कृत इति वलयीकृतो वासुकिर्येन स वलयीकृतवासुकिः, लीलया ताण्डवं लीलाताण्डवं तत्र पण्डितः लीलाताण्डवपण्डितः, भवति जगदस्मादिति भवः शङ्करो भव्याय कल्याणाय भवत्वित्यर्थः ।

ननु क्रियाऽन्वयेन शान्ताकाङ्क्षस्य विशेष्यवाचकपदस्य विशेषणान्तरेणान्वयार्थं पुनरनुसंधानं समाप्तपुनरात्तत्वं नाम काव्यदोषः । यथा—

नाशयन्तो घनध्वान्तं तापयन्तो वियोगिनः ।

पतन्ति शशिनः पादा भासयन्तः क्षमातलम् ॥

इत्यत्र पतनक्रियाऽन्वयेन शान्ताकाङ्क्षस्य पादा इत्यस्य भासयन्त इति पदप्रतिपाद्यविशेषणेनान्वयार्थं पुनः कीदृशाः पादा इत्यनुसन्धानेन समाप्तपुनरात्तत्वं दोषस्तथा प्रकृतेऽपि भवो भव्याय भवत्वित्यन्वयेन शान्ताकाङ्क्षस्य भवपदस्य लीलाताण्डवपण्डित इतिपदप्रतिपाद्यविशेषणेनान्वयार्थं पुनः कीदृशो भव इत्यनुसंधानेन समाप्तपुनरात्तत्वं स्यादिति चेत् ?

न, विशेषणत्वं हि विद्यमानत्वे सतीतरव्यावर्त्तकत्वम् । तच्च प्रकृते भवस्यैव, तस्यै-

निजनिर्मितकारिकावलीमतिसंक्षिप्तचिरन्तनोक्तिभिः ।
विशदीकरवाणि कौतुकान्ननु राजीवदयावशंवदः ॥ २ ॥

मुक्तावलीमयूखः ।

वेतरव्यावर्तकत्वेन विवक्षणादिति लीलाताण्डवपण्डित इत्यस्य विशेष्यतास्वीकारेण समासपुनरात्तत्वाभावात् ।

नन्वेवं सति नीलोत्पलमित्यत्रोत्पलस्यापीतरव्यावर्तकत्वेन विवक्षायां विशेषणतया 'विशेषणं विशेष्येण बहुलम्' इति समाससंज्ञाविधायकशास्त्रघटकप्रथमाऽन्तपदबोध्यतया 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इत्युपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति पूर्वनिपाते उत्पलनीलमित्यपि स्यादतः 'जातितद्भिन्नप्रवृत्तिनिमित्तकानां शब्दानां मध्ये जातिप्रवृत्तिनिमित्तकमेव विशेष्यवाचकम्' इति स्वीकर्त्तव्यम् । अत एव 'कडाराः कर्मधारये' इति सूत्रं चरितार्थम् । अन्यथा विशेष्यविशेषणभावस्य विवक्षाऽधीनतया जैमिनेर्विशेषणत्वेन विवक्षायां जैमिनिकडार इति, कडारस्य विशेषणत्वेन विवक्षायां कडारजैमिनिरिति रूपद्वयसिद्धौ तद् व्यर्थं स्यात् । 'विशेष्यविशेषणभावे कामचारः' इति प्रवादस्तु खञ्जकुब्जः इत्यादावेव । अत्र हि कस्यापि जातिप्रवृत्तिनिमित्तकत्वाभावेन नोक्तनियमप्रवृत्तिरिति तत्त्वम् । एवञ्च प्रकृते भवशब्दस्य भवत्वजातिप्रवृत्तिनिमित्तकतया विशेष्यवाचकत्वमेव । लीलाताण्डवपण्डित इत्यस्य पण्डित्य ( बुद्धि ) रूपगुणप्रवृत्तिनिमित्तकतया विशेषणवाचकत्वमेवेति समासपुनरात्तत्वं दुष्परिहरम् ।

न चैकव्यक्तिवृत्तितया भवत्वं न जातिरिति वाच्यम्,

कल्पभेदेन शिवशरीरस्य भिन्नतया भवत्वस्य जातित्वे बाधकाभावात् ।

न च भवत्यस्माज्जगदिति व्युत्पत्त्या भवशब्दस्य क्रियाप्रवृत्तिनिमित्तकत्वेन जातिप्रवृत्तिनिमित्तकत्वाभाव इति वाच्यम्,

रूढेर्योगाद् बलीयस्त्वेन भवशब्दस्य जातिप्रवृत्तिनिमित्तकत्वौचित्यादिति चेद् ?

अत्रोच्यते-आकाङ्क्षा द्विविधा—उत्थिताकाङ्क्षा उत्थाप्याकाङ्क्षा च । तत्रान्त्यायां समासपुनरात्तत्वं दोषो नाद्यायां, तत्राकाङ्क्षाया उत्थिततया विशेष्यवाचकपदस्य क्रियाऽन्वयेन शान्ताकाङ्क्षत्वाभावात्समासपुनरात्तत्वाप्रसक्तेः । प्रकृते हि किमर्थं विधोश्चूडामणीकरणं किमर्थं वासुकेर्वलयीकरणमिति प्रयोजनाकाङ्क्षाया उत्थिततया तन्निवृत्तये लीलाताण्डवपण्डित इत्यस्योपादानेन समासपुनरात्तत्वाभावात् ।

समासपुनरात्तत्वपरिष्कारस्तु—वाक्यविशिष्टत्वं समासपुनरात्तत्वम् । वैशिष्ट्यंच स्वतादात्म्य-स्वविशिष्टविशेषणवाचकपदघटितत्वोभयसंबन्धेन । अत्र वैशिष्ट्यं स्वघटकविशेष्यवाचकपदावधिकपूर्वत्वाभाववत्त्व स्वघटकपदजनिताकाङ्क्षाशामकार्थाबोधकत्वोभयसंबन्धेन, समन्वयः स्वयमूहनीय इत्यलम् ॥ १ ॥

**निजेति** । अतिसंक्षिप्ताश्च ताश्चिरन्तनानामुक्तयस्ताभिः कौतुकाद्विशदीकरवाणीति कथनेन प्रकृतग्रन्थनिर्माणे स्वस्य प्रयासाभावः सूचितः ।

**राजीवदयावशंवद इति** । राजीवे तन्नामके शिष्ये दया तया वशंवतीति राजीवदयावशंवदः, अथवा राजीवस्य राजीवलोचनस्य भगवतो दया तया वशंवदतीति राजी-

सद्द्रव्या गुणगुम्फिता सुकृतिनां सत्कर्मणां ज्ञापिका
सत्सामान्यविशेषनित्यमिलिताभावप्रकर्षोज्ज्वला ।
विष्णोर्वक्षसि विश्वनाथकृतिना सिद्धान्तमुक्तावली
विन्यस्ता मनसो मुदं वितनुतां सद्युक्तिरेषा चिरम् ॥ ३ ॥

---

मुक्तावलीमयूखः ।

वदयावशंवदः, 'विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वाच्य' इति वचनेन लोचनशब्दस्य लोप इति बोध्यम् ॥ २ ॥

सद्द्रव्येति । द्रव्यैः सहिता सद्द्रव्या द्रव्यसाध्या बहुमूल्येति यावद्, गुणेन सूत्रेण गुम्फिता गुणगुम्फिता सुकृतिनां सत्कर्मणां भगवद्भजनादीनां ज्ञापिका बोधिका सामान्यं च विशेषश्च सामान्यविशेषौ सन्तौ च तौ सामान्यविशेषौ सत्सामान्यविशेषौ ताभ्यां नित्यं मिलिता संबद्धेति सत्सामान्यविशेषनित्यमिलिता समीचीनसामान्यधर्मेण मुक्तावलीत्वेन समीचीन विशेषधर्मेण महत्त्वनिर्मलत्वादिना च संबद्धेति यावत्, तार्किकैस्तमसस्तेजोऽभावरूपत्वाङ्गीकाराद् अभावइत्यस्य तेजोऽभाव इत्यर्थः तमसीति यावत्, अन्धकारे सति प्रकर्षेणोज्ज्वला इत्यभावप्रकर्षोज्ज्वला सती समीचीना युक्तिर्योजना मुक्तानां सन्निवेशो यस्यां सा सद्युक्तिः एषा सिद्धान्ता इव मुक्ताः सिद्धान्तमुक्ताः सिद्धान्तमुक्तास्तासामवली सिद्धान्तमुक्तावली विश्वनाथकृतिना विष्णोर्वक्षसि विन्यस्ता सती चिरं मनसो मुदं वितनुताम् इति मुक्तावलीपक्षे समासादिः ।

ग्रन्थपक्षे तु द्रव्यैः प्रतिपादकत्वसंबन्धेन सहितेति सद्द्रव्या गुणैर्गुणनिरूपणैर्गुम्फिता सन्ति च तानि कर्माणि सत्कर्माण्युत्क्षेपणादीनि तेषां ज्ञापिका न तु भ्रमणादीनां ज्ञापिकेति भावः, सत्त्वं चात्रान्यत्रानन्तर्भावरूपम्, सामान्यं च विशेषश्च नित्यमिलितं (समवायः) च सामान्यविशेषनित्यमिलितानि सन्ति विद्यमानानि प्रतिपादकत्वसंबन्धेन सामान्यविशेषनित्यमिलितानि यस्यां सा सत्सामान्यविशेषनित्यमिलिता अभावस्य प्रकर्षस्तेनोज्ज्वला अभावप्रकर्षोज्ज्वला प्रभाकरखण्डिताभावपदार्थस्थापनेन प्रख्यातमाहात्म्येति यावत्, सत्यः समीचीना युक्तयो यस्यां सा सद्युक्तिः एषा सिद्धान्ता मुक्ता इवेति सिद्धान्तमुक्ता 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति समासः । तासामवली सिद्धान्तमुक्तावली विश्वनाथकृतिना विष्णोर्वक्षसि विन्यस्ता सती सुकृतिनां चिरं मनसो मुदं वितनुताम् इत्यर्थः ।

नन्वेकशब्दप्रतिपाद्यत्वमपि साधारणो धर्म इत्यालंकारिकैरभ्युपेयत इति प्रकृते सद्द्रव्येत्यादिना साधारणधर्मस्य प्रयोगसत्त्वाच्चोपमितमित्यादिना समासो वक्तुं युक्तोऽपि तु सिद्धान्ता एव मुक्ता इत्येवेति रूपकमेव नोपमेति चेद् ?

न, सद्द्रव्येत्यस्य सिद्धान्तमुक्तावलीवृत्तित्वेऽपि सिद्धान्तवृत्तित्वस्य मुक्तावृत्तित्वस्य चाभावेन सिद्धान्तमुक्तयोः साधारणधर्मस्य प्रकृतेऽप्रयोगाद् उपमितमिति समासे बाधकाभावात् ।

ननु प्रकरणेन ग्रन्थपक्ष एतत्तात्पर्यनिर्णयात् तात्पर्यज्ञानस्य च शाब्दबोधे हेतुत्वात् सकृदुच्चरितन्यायाच्च कथमर्थान्तरस्य प्रतीतिरिति चेद् ?

उच्यते—शक्त्याऽर्थान्तरबोधनासम्भवेऽपि व्यञ्जनयाऽर्थान्तरबोधसम्भव इति । तच्च प्रकृतेऽनुपपद्यमानं ग्रन्थमुक्तावल्योरुपमानोपमेयभावे पर्यवस्यति । तेन चोपमाऽलङ्कारो व्यङ्ग्य इति

विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति—

नूतनेत्यादि । ननु मङ्गलं न विघ्नध्वंसं प्रति न वा समाप्तिं प्रति कारणं विनाऽपि मङ्गलं नास्तिकादीनां ग्रन्थे निर्विघ्नपरिसमाप्तिदर्शनादिति चेद् ?

न, अविगीतशिष्टाचारविषयत्वेन मङ्गलस्य सफलत्वे सिद्धे तत्र च फलजिज्ञासायां सम्भवति दृष्टफलकत्वेऽदृष्टफलकल्पनाया अन्याय्यत्वाद् उपस्थितत्वाच्च समाप्तिरेव फलं कल्प्यते ।

---

मुक्तावलीमयूखः ।

न च तार्किकैर्व्यञ्जनाया अनङ्गीकारात्कथमेतदिति वाच्यम् ।

व्यक्तिविवेककृता व्यञ्जनाया अनुमानेऽन्तर्भावस्य प्रतिपादितत्वादनुमानस्य च तार्किकैरङ्गीकारेण क्षतिविरहादित्यलं पल्लवितेन ॥ ३ ॥

विघ्नविघातायेति । विशिष्टो घातो विघातः । वैशिष्ट्यं चोत्पत्तिमत्त्वमेवात्र बोध्यम् ।

ननु घातपदमेवोत्पत्तिविशिष्टाभावरूपध्वंसबोधकम् इत्युत्पत्तिमदर्थकस्य विपदस्य नैष्फल्यमिति चेद् ?

न, सकीचकैर्मारुतपूर्णरन्ध्रैरिति महाकविकालिदासीयपद्ये 'कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इति कोशबलेन मारुतपूर्णरन्ध्रत्वविशिष्टवेणुवाचककीचकपदेन मारुतपूर्णरन्ध्ररूपार्थस्य लाभेन मारुतपूर्णरन्ध्रैरित्यस्य वैयर्थ्यभिया 'विशिष्टवाचकानां पदानां सति पृथग्विशेषणवाचकपदसमवधाने विशेष्यमात्रपरत्वम्' इत्यवश्यमभ्युपेयम् । ततश्च कीचकपदस्य वेणुमात्रपरतया मारुतपूर्णरन्ध्रैरित्यस्य न वैयर्थ्यम् । एवं प्रकृते घातपदस्याभावमात्रपरत्वाङ्गीकारेणोत्पत्तिमदर्थकविपदस्य न वैयर्थ्यमित्यदोषाद् उपसर्गाणां द्योतकत्वस्यैव नैयायिकाभिमततया शङ्काया एवाभावाच्च ।

नूतनेत्यादीति । नूतनो यो जलधरो मेघो नूतनजलधरः, नूतनजलधरस्य रुचिरिव रुचिर्यस्य स नूतनजलधररुचिस्तस्मै, यथा मेघो वृष्ट्या जनतां मोदयति तथा कृष्णोऽपि भक्तमनोरथपूर्त्या भक्तान् मोदयत्वित्यभिप्रायः । गोपानां वधूट्यस्तासां दुकूलानि तेषां चौरस्तस्मै, गा इन्द्रियाणि पान्तीति गोपा जीवास्तेषां वधूट्योऽविद्यास्ता एव दुकूलानि स्वरूपाच्छादकत्वात् तेषां चोरस्तस्मा इति वा, कृष्णो यथा गोपीदुकूलचौर्यं कृतवान् तथा मदीयाज्ञानचौर्यमपि करोत्वित्यभिप्रायः । संसार एव महीरुहो वृक्षस्तस्य बीजाय यः संसारस्यैवोत्पादकस्तस्य मदीयमनोरथसम्पादने कियानायास इत्यभिप्रायः । दुःखं कृषतीति कृष्णस्तस्मै दुःखापहर्त्रे, नम इति । अत्र 'उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः' इति लक्षणलक्षितः परिकरालङ्कारो बोध्यः । अत्रापि समाप्तपुनरात्तत्वशङ्कासमाधाने पूर्ववद्बोध्ये इति ।

ननु मङ्गलं निष्फलं फलविशेषशून्यत्वाज्जलताडनवदित्यनुमानेन मङ्गलस्य निष्फलत्वात्तदाचरणमयुक्तम् ?

न च—फलविशेषशून्यत्वादित्यस्य यत्किञ्चित्फलविशेषशून्यत्वादित्यर्थो यावत्फलविशेषशून्यत्वादित्यर्थो वा ? नाद्यः, पुत्रेष्टियागादावपि यत्किञ्चित्स्वर्गादिरूपफलविशेष-

इत्थं च यत्र मङ्गलं न दृश्यते तत्रापि जन्मान्तरीयं तत्कल्प्यते । यत्र च सत्यपि मङ्गले समाप्तिर्न दृश्यते तत्र बलवत्तरो विघ्नो विघ्नप्राचुर्यं वा बोध्य-

मुक्तावलीमयूखः ।

शून्यत्वसत्त्वेन निष्फलत्वरूपसाध्यस्य च तत्रासत्त्वेन साध्याभाववद्वृत्तितया हेतोर्व्यभिचारित्वापत्तेः । न द्वितीयः, प्राचीनतार्किकैः समाप्तिफलकत्वस्य नव्यतार्किकैर्विघ्नध्वंसफलकत्वस्य च मङ्गले स्वीकारेण यावत्फलविशेषशून्यत्वरूपहेतोः पक्षे मङ्गलेऽसत्त्वेन पक्षताऽवच्छेदकावच्छेदेन हेतोरसिद्धिः स्वरूपासिद्धिरिति लक्षणलक्षितस्वरूपासिद्धत्वापत्तेरिति मङ्गले उक्तहेतुना निष्फलत्वानुमानासम्भवः—इति वाच्यम्, व्यतिरेकव्यभिचारज्ञानस्य कारणताग्रहविरोधितया नास्तिकादीनां ग्रन्थे मङ्गलरूपकारणाभावेऽपि समाप्तिरूपस्य विघ्नध्वंसरूपस्य वा फलस्य दर्शनेन कारणाभावे कार्योत्पादरूपव्यतिरेकव्यभिचारसद्भावेन समाप्तेर्विघ्नध्वंसस्य वा मङ्गलफलत्वानुपपत्त्या फलान्तरस्य तार्किकैरप्यनङ्गीकृततया यावत्फलविशेषशून्यत्वरूपहेतोः स्वरूपासिद्धत्वाभावेन मङ्गले निष्फलत्वसिद्धेरिति चेत् ?

न, मङ्गलं सफलं विषयत्वात् कृष्यादिवदध्ययनवद्वेत्यनुमानेन मङ्गले सफलत्वसिद्ध्या तदाचरणस्यावश्यकत्वात् ।

न च विषयत्वरूपहेतोः केवलान्वयितया ज्ञानविषयसुखेऽपि सत्त्वेन तस्य च फलरूपतया सफलत्वाभावेन व्यभिचारित्वमिति वाच्यम् ।

विषयत्वादित्यस्याचारविषयत्वादित्यत्र तात्पर्येणाचारविषयत्वस्य सुखेऽसत्त्वेन व्यभिचारित्वाभावात् । आचारश्चात्र कृतिः, विषयत्वश्रुतेः । ज्ञानेच्छाद्वेषकृतय एव सविषयकाः । तत्र व्यापारसामान्यार्थकस्याङ्पूर्वचरतेर्व्यापारविशेषकृतिपरत्वमेवोचितं न तु व्यापारान्तरज्ञानादिपरत्वम् इति बोध्यम् ।

न च कृतिविषयत्वस्य हेतुत्वविवक्षणेऽपि सुखोद्देशेन धर्मं करोतीतिप्रतीत्योद्देश्यतया कृतिविषयत्वस्य सुखेऽपि सत्त्वेन व्यभिचारित्वतादवस्थ्यं हेतोरिति वाच्यम् ।

विधेयतया कृतिविषयत्वस्य हेतुत्वेनादोषात ।

न चैवमपि सफलत्वरूपसाध्याभाववति चैत्यवन्दने नास्तिककृतिविषयत्वस्य सत्त्वेन व्यभिचारतादवस्थ्यमिति वाच्यम् ।

शिष्टकृतिविषयत्वस्य हेतुत्वविवक्षणेनादोषात । शिष्टत्वं च वेदप्रामाण्याभ्युपगन्तृत्वम् । तच्च नास्तिके नास्तीति तदीयकृतिविषयत्वस्य चैत्यवन्दने सत्त्वेऽपि शिष्टकृतिविषयत्वस्याभावेन व्यभिचाराभावात् ।

न च व्युत्क्रमेण कृते यागे सफलत्वस्याभावात् शिष्टकृतिविषयत्वस्य च सत्त्वाद् व्यभिचारतादवस्थ्यमिति वाच्यम् ।

फलसाधनतांशे भ्रमरहितत्वरूपशिष्टत्वस्य हेतुकुक्षौ प्रवेशेन व्यभिचाराभावात ।

(१)न च सफलत्वं प्रवृत्त्युपयुक्तबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वम् । तच्च श्येन-

---

(१) प्रवृत्तिं प्रति कृतिसाध्यत्वप्रकारकं ज्ञानम् इष्टसाधनत्वप्रकारकं ज्ञानं बलवदनिष्टाननुबन्धित्वप्रकारकं ज्ञानं च कारणम् । तेन सुमेरुशृङ्गाहरणे जलताडने मधुविषसम्पृक्तान्नभोजने च न प्रवृत्तिरिति बोध्यम् ।

म् । प्रचुरस्यास्यैव बलवत्तरविघ्ननिराकरणकारणत्वम् । विघ्नध्वंसस्तु मङ्गलस्य द्वारमित्याहुः प्राञ्चः ॥

मुक्तावलीमयूखः ।

यागे नास्ति तस्य बलवदनिष्टनरकसाधनत्वात् शिष्टकृतिविषयत्वं चास्तीति पुनरपि व्यभिचार इति वाच्यम् ।

अविगीतशिष्टाचारविषयत्वस्य हेतुत्वविवक्षणेनादोषात् । अविगीतत्वं च बलवदनिष्टाननुबन्धित्वम् । तच्च श्येनयागीयकृतौ नास्तीत्याशयात् (१) । एवञ्च मङ्गलं सफलम् अविगीतशिष्टाचारविषयत्वादित्यनुमानेन मङ्गले सफलत्वसिद्धिः ।

ततश्च फलविशेषजिज्ञासायां दृष्टफलकत्वसम्भवेऽदृष्टफलकल्पनाया अनौचित्येन मङ्गलं समाप्तिफलकं समाप्त्यन्यफलकत्वे सति सफलत्वादित्यनुमानेन समाप्तिफलकत्वसिद्धिः ।

न च विश्वजिता यजेतेत्यत्र फलविशेषस्याश्रवणेन किमस्य यागस्य फलम् इति शङ्कायां सर्वाभिलाषास्पदत्वात् स्वर्ग एव विश्वजिद्यागफलमित्यर्थकेन 'स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात्' इति सूत्रेण स्वर्ग एव फलमिति मीमांसायां सिद्धान्तितं, तद्वदिहापि स्वर्ग एव फलमस्तु । ततश्च ग्रन्थनिर्माणवेलायां मङ्गलाचरणमयुक्तमेवेति वाच्यम् । विश्वजिता यजेतेत्यत्र कस्यापि फलस्योपस्थितेरभावेन तत्र स्वर्गफलकत्वाङ्गीकारेऽपि प्रकृते हे ईश्वर ! अयं ग्रन्थः समाप्यतामिति सर्वस्य प्रार्थनयोपस्थितसमाप्तिफलकत्वत्यागे बीजाभावात् ।

ननु नास्तिकग्रन्थे मङ्गलाभावेऽपि समाप्तेर्दर्शनेन व्यतिरेकव्यभिचारग्रहेण कारणताग्रहप्रतिबन्धेन समाप्तेर्न फलत्वमिति चेद् ?

न, नास्तिको जन्मान्तरीयमङ्गलवान् ग्रन्थसमाप्तेरित्यनुमानेन तत्राऽपि मङ्गलसत्वे समाप्तेर्दर्शनेन व्यतिरेकव्यभिचाराभावात् ।

ननु किरणावल्यादौ मङ्गलसत्त्वेऽपि समाप्तिरूपकार्यादर्शनेन कारणसत्वे कार्यानुत्पादरूपान्वयभिचारेण मङ्गले समाप्तिकारणत्वसंशयोऽन्वयव्यभिचारज्ञानस्य कारणतासंशायकत्वदिति चेद् ?

न, प्रचुरविघ्ननाशं प्रति प्रचुरमङ्गलस्य कारणतया तत्र प्रचुरमङ्गलरूपकारणाभावेनान्वयव्यभिचाराभावात् ।

ननु मङ्गले प्राचुर्यं विघ्नसमसंख्याकत्वरूपं विघ्नाधिकसंख्याकत्वरूपं वा ? नाद्यः, विघ्नाधिकसंख्याकमङ्गलस्थले समाप्त्यभावप्रसङ्गात् । न द्वितीयः, विघ्नसमसंख्याकमङ्गलस्थले समाप्त्यभावप्रसङ्गादिति चेत् ?

अत्रोच्यते—बलवत्तरविघ्ननाशं प्रति बलवत्तरमङ्गलस्य कारणतेत्येवं कार्यकारणभावस्वीकारेणादोषात् । मङ्गले बलवत्तरत्वं धर्मविशेषः समाप्त्यनन्तरसम्वेद्यः ।

ननु पूर्वं समाप्तेर्मङ्गलफलत्वमित्युक्तं; तथाच विघ्नध्वंसो भवतु मा वा, परन्तु समाप्तिः किं न स्यादिति चेद् ?

(१) जलताडनेऽतिव्याप्तिवारणायालौकिकेत्यपि हेतुदले निवेश्यमेव । अत एव बहुषु पुस्तकेषु अलौकिकाविगीतेत्यादिस्तत्पदघटितः पाठो दृश्यते ।

नव्यास्तु मङ्गलस्य विघ्नध्वंस एव फलं समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापात्।

न च स्वतःसिद्धविघ्नविरहवता कृतस्य मंगलस्य निष्फलत्वापत्तिरिति वाच्यम्,

इष्टापत्तेः। विघ्नशङ्कया तदाचरणात् तथैव शिष्टाचारात्।

न च तस्य निष्फलत्वेऽपि न तद्बोधकवेदाप्रामाण्यापत्तिरिति वाच्यम्,

सति विघ्ने तन्नाशस्यैव वेदबोधितत्वात्। अत एव पापभ्रमेण कृतस्य प्रायश्चित्तस्य निष्फलत्वेऽपि न तद्बोधकवेदाप्रामाण्यम्।

मंगलं च विघ्नध्वंसविशेषे कारणं विघ्नध्वंसविशेषे च विनायकस्तवपाठादि।

---

मुक्तावलीमयूखः।

न, विघ्नध्वंसद्वारैव मङ्गले समाप्तिजननस्वीकारेणादोषात्। द्वारत्वं च तज्जन्यत्वेसति तज्जन्यजनकत्वम्। विघ्नध्वंसो हि मङ्गलजन्यः मङ्गलजन्यसमाप्तिजनकश्चेति भवति समन्वयः।

इति प्राचीनमतम्।

ननु यत्र भोगादिना विघ्नध्वंसस्तत्रापि समाप्तिः, यत्र च मङ्गलेन विघ्नध्वंसस्तत्रापि समाप्तिरिति; अवश्यक्लृप्तनियतपूर्ववर्तित्ववता विघ्नध्वंसेनैव मङ्गलस्थलीयसमाप्त्युपपत्तेः 'नियतावश्यकपूर्वभाविव्यतिरिक्तमन्यथासिद्धम्' इति लक्षणलक्षितान्यथासिद्धिसत्त्वेन मङ्गलस्य समाप्तिं प्रति न कारणता।

न च व्यापारेण व्यापारिणो नान्यथासिद्धिः। अत एव सोमेन यजेतेत्यादौ चिरविनष्टस्य यागस्य स्वर्गसाधनत्वोपपत्त्यर्थं कल्पितेनापूर्वेण स्वर्गं प्रति यागस्यान्यथासिद्धत्वाभावात् सोमेनेति करणतृतीयासिद्धिरिति वाच्यम्।

यत्र व्यापारिणः प्रमाणबोधितकारणतानिर्वाहाय व्यापारस्य कारणत्वं कल्प्यते तत्रैव व्यापारेण व्यापारिणो नान्यथासिद्धत्वम्। अत एव काशीमरणस्य तत्त्वज्ञानेन मुक्तावन्यथासिद्धत्वात् काशीमरणान्मुक्तिरित्यत्र हेतुपञ्चम्यनुपपत्त्या प्रयोजकत्वपरा पञ्चमीति समर्थितम्। तथा च प्रकृते मङ्गलस्य समाप्तिकारणत्वानभ्युपगमेऽपि प्रतिबन्धकाभावस्य कार्यमात्रे हेतुत्वस्यौत्सर्गिकतया विघ्नध्वंसस्य कारणत्वं सिद्धमेवेति मङ्गलेऽन्यथासिद्धत्वस्य दुष्परिहरत्वादित्यरुचेराह—

नव्यास्त्विति।

ननु शिष्टाचारानुमितया विघ्नध्वंसकामो मङ्गलमाचरेदिति स्मृत्या मङ्गलस्य 'सर्वे विघ्नाः शमं यान्ति गणेशस्तवपाठतः' इति प्रत्यक्षस्मृत्या विनायकस्तवपाठस्य च कारणत्वावगमेन विनायकस्तपाठरूपकारणाभावे मङ्गलेन, मङ्गलरूपकारणाभावे विनायकस्तवपाठेन विघ्नध्वंसस्य जननाद् व्यतिरेकव्यभिचारेण विघ्नध्वंसं प्रति मङ्गलस्य विनायकस्तवपाठस्य वा कारणताऽभ्युपगन्तुमनर्हा ?

न च विनायकस्तपाठोऽपि मङ्गलमेवेति वाच्यम्।

पाठस्य कण्ठताल्वाद्यभिघातरूपत्वेन मङ्गलस्य च शब्दरूपत्वेन तयोरैक्यासंभवोऽत आह—मङ्गलं चेति।

क्वचिच्च विघ्नात्यन्ताभाव एव समाप्तिसाधनं प्रतिबन्धकसंसर्गाभावस्यैव कार्यजनकत्वात् ।

इत्थं च नास्तिकादीनां ग्रन्थेषु जन्मान्तरीयमङ्गलजन्यदुरितध्वंसः, स्वतःसिद्धविघ्नात्यन्ताभावो वाऽस्तीति न व्यभिचार इत्याहुः ।

---

मुक्तावलीमयूखः ।

अयं भावः—मङ्गलाव्यवहितोत्तरक्षणजायमानविघ्नध्वंसत्वावच्छिन्नं प्रति मङ्गलस्य-विनायकस्तवपाठाव्यवहितोत्तरक्षणजायमानविघ्नध्वंसत्वावच्छिन्नं प्रति विनायकस्तवपाठस्य—कारणतास्वीकारेण व्यतिरेकव्यभिचाराभाव इति ।

ननु यत्र विघ्नो नास्ति तत्र समाप्तिर्भवति परन्तु ध्वंसं प्रति प्रतियोगिनः कारणतया प्रतियोगिनो विघ्नस्यासत्त्वेन तद्ध्वंसस्याप्यभावाद् विघ्नध्वंसरूपकारणाभावेन व्यतिरेकव्यभिचार इत्यत आह—क्वचिच्चेति ।

क्वचिच्च विघ्नध्वंसेन क्वचिच्च विघ्नात्यन्ताभावेन समाप्तिर्भवति ।

व्यतिरेकव्यभिचारवारणं तु विघ्नध्वंसाव्यवहितोत्तरक्षणजायमानसमाप्तिं प्रति विघ्नध्वंसस्य विघ्नात्यन्ताभावाव्यवहितोत्तरक्षणजायमानसमाप्तिं प्रति विघ्नात्यन्ताभावस्य कारणतेति रीत्या बोध्यम् ।

ननु विघ्नसंसर्गाभावत्वेन विघ्नध्वंसात्यन्ताभावयोरनुगमं कृत्वा समाप्तिं प्रति विघ्नसंसर्गाभावः कारणमिति कार्यकारणभावस्वीकारेण व्यतिरेकव्यभिचारवारणसंभवादव्यवहितोत्तरत्वनिवेशेन तद्वारणमनुचितं गौरवादिति चेद् ?

न, अस्मिन्नात्मनि समवायेन विघ्नो वर्तते तत्र संयोगेन विघ्नो नास्तीति प्रतीतिसाक्षिकविघ्नसंसर्गाभावत्त्वेन समाप्तिवारणाय समवायसंबन्धावच्छिन्नविघ्नत्वावच्छिन्नप्रतियोगिताकाभावत्वेन कारणता वाच्या । तथाच ध्वंसीयप्रतियोगितायाः संसर्गेण धर्मेण चानवच्छिन्नतयैकरूपेणानुगमासंभवात् पृथगेव विघ्नध्वंसात्यन्ताभावयोः कारणता वाच्येत्याशयात् ।

ननु ध्वंसीयप्रतियोगितायां संसर्गावच्छिन्नत्वं किमिति नाङ्गीक्रियत इति चेद् ?

उच्यते, समवायेन घटाधिकरणे संयोगेन घटो नास्ति, संयोगेन घटाधिकरणे समवायेन घटो नास्तीति प्रतीत्योर्वैलक्षण्योपपत्तयेऽत्यन्ताभावीयप्रतियोगितायां सम्बन्धावच्छिन्नत्वमङ्गीक्रियते, ध्वंसे तादृशबुद्ध्यसंभवेन नाङ्गीक्रियत इति ।

वस्तुतस्तु—विघ्नध्वंसाधिकरणेऽपि समवायसम्बन्धावच्छिन्नविघ्नत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावो वर्तते ध्वंसात्यन्ताभावयोर्विरोधे मानाभावात् । ततश्च समाप्तिं प्रति विघ्नात्यन्ताभावत्वेनैव कारणता न तु विघ्नध्वंसत्वेनापीति नाव्यवहितोत्तरत्वनिवेशस्योपयोग इति ध्येयम् ।

नव्यमते व्यतिरेकव्यभिचारं परिहरति—इत्थं चेति ।

ननु ध्वंसप्रागभावयोः स्वप्रतियोगिसमवायिकारणवृत्तित्वनियमः । तथाच विघ्नध्वंसस्य प्रतियोगी विघ्नः पापं, तस्य समवायिकारणमात्मा, तत्र विघ्नध्वंसः स्वरूपेण वर्तते चरमवर्णध्वंसरूपसमाप्तेः प्रतियोगी चरमवर्णः, तस्य समवायिकारणमाकाशं, तत्र

संसारेति। संसार एव महीरुहो वृक्षस्तस्य बीजाय, निमित्तकारणायेत्यर्थः। एतेन ईश्वरे प्रमाणमपि दर्शितं भवति। तथाहि यथा घटादिकार्यं कर्तृजन्यं तथा क्षित्यङ्कुरादिकमपि।

न च तत्कर्तृत्वमस्मदादीनां संभवतीत्यतस्तत्कर्तृत्वेनेश्वरसिद्धिः।

मुक्तावलीमयूखः।

स्वरूपेण समाप्तिर्वर्तत इति समाप्तिविघ्नध्वंसयोरेकाधिकरणवृत्तित्वाभावेन कथं कार्यकारणभाव इति चेद् ?

उच्यते, विघ्नध्वंसः स्वरूपेणात्मनि वर्तते स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्त्वसम्बन्धेन समाप्तिरपि तत्र वर्तत इत्येव कार्यकारणयोरेकाधिकरणवृत्तित्वनिर्वाह इति।

इति मङ्गलवादे नव्यमतम्।

ननु बीजनाशानन्तरं बीजावयवैरङ्कुरोत्पादाद्बीजावयवा एव वृक्षस्य समवायिकारणम्। तथाच बीजायेत्युक्त्येश्वरावयवा जगतःकारणमिति प्रतीयते। तच्चायुक्तम्, ईश्वरस्य निरवयवत्वादतो बीजायेत्यस्यार्थमाह—निमित्तकारणायेत्यर्थ इति।

नन्वीश्वरे प्रमाणाभावात्तन्नमस्करणमयुक्तम्। तथाहि, प्रत्यक्षं द्विविधं—बाह्यं मानसं च। तत्र बहिरिन्द्रियजन्यद्रव्यप्रत्यक्ष उद्भूतरूपस्य कारणत्वादीश्वरे रूपाभावान्न बाह्यप्रत्यक्षप्रसरः, नवा मानसप्रत्यक्षप्रसरः परात्मनः परेण मनसा प्रत्यक्षवारणायात्ममानसं प्रति परात्मव्यावृत्तविजातीयमनःसंयोगत्वेन कारणताऽभ्युपगमात्। नाप्यनुमानं प्रमाणम्, ईश्वरस्याप्रत्यक्षतया तस्य केनचिल्लिङ्गेन सहचारदर्शनाभावेन व्याप्तिग्रहाभावात्। न चोपमानं मानमीश्वरतुल्यस्य कस्यचिदभावेन सादृश्यज्ञानासत्त्वात्। नापि शब्दः प्रमाणं श्रुतीनामीश्वरोच्चरितत्वेनैव प्रमाण्यस्य वक्तव्यतया तत्रेश्वर एव संदेहेन श्रुतिप्रामाण्यस्यापि संदिग्धत्वादिति चतुर्विधप्रमाणागोचर ईश्वरः कथं नमस्कार्यताभागिति चेद् ?

न, कार्यं प्रति कृतेःकारणतास्वीकारेण क्षितिः कृतिजन्या कार्यत्वाद्घटवदित्यनुमानेन क्षितेः कृतिजन्यत्वसिद्धौ क्षितिजनिका कृतिः यत्किंचिदात्मसमवेता कृतित्वादस्मदादिकृतिवदित्यनुमानेन तादृशकृत्याश्रयीभूतः कश्चिदात्मा सिध्यति। स चास्मदादिर्न संभवतीतीश्वरसिद्धिरित्यदोषात्।

ननु क्षितिः कृतिजन्या कार्यत्वादित्यनेन पक्षताऽवच्छेदकावच्छेदेन पक्षताऽवच्छेदकसामानाधिकरण्येन वा कृतिजन्यत्वं साध्यते ? नाद्यः, पक्षताऽवच्छेदकं क्षितित्वं तदवच्छेदेन कृतिजन्यत्वसाधने परमाणौ बाधात्। न द्वितीयः, पक्षताऽवच्छेदकं क्षितित्वं तत्सामानाधिकरण्येनकृतिजन्यत्वसाधने घटादौ सिद्धसाधनापत्तेरिति चेत ? इत एवारुचेराहाङ्कुरेति।

तथा चाङ्कुरः कृतिजन्यः कार्यत्वादित्यनुमानेनेष्टसिद्धिः। अत्र चाङ्कुरत्वावच्छेदेन कृतिजन्यत्वसाधने न क्वापि बाधो नित्यस्याङ्कुरस्याभावात्। अङ्कुरत्वसामानाधिकरण्येन वा कृतिजन्यत्वसाधने न क्वापि सिद्धसाधनं क्वाप्यङ्कुरे जीवीयकृतिजन्यत्वासिद्धेरितिभावः।

न चाङ्कुरः कृतिजन्यत्वाभाववान् शरीराजन्यत्वादाकाशवदित्यनुमानेन सत्प्रतिपक्ष इति वाच्यम्,

व्यभिचारशङ्कानिवर्तकतर्कशून्यत्वेन त्वदुक्तानुमानासंभवेन सत्प्रतिपक्षितत्वाभावात्।

न च शरीराजन्यत्वेन कर्त्रजन्यत्वसाधकेन सत्प्रतिपक्ष इति वाच्यम् । अप्रयोजकत्वात् । मम तु कर्तृत्वेन कार्यत्वेन कार्यकारणभाव एव अनुकूलस्तर्कः । "द्यावाभूमी जनयन्देव एको विश्वस्य कर्ता भुवनस्य गोप्ता" इत्यादय आगमा अप्यनुसंधेयाः ॥ १ ॥

मुक्तावलीमयूखः ।

मम तु यदि कार्यत्वं कृतिजन्यत्वव्यभिचारि स्यात्तर्हि कृतिजन्यत्वावच्छेदकं न स्यादित्येवानुकूलस्तर्कः ।

ननु प्रकृतानुकूलतर्के किम्मानमिति चेत् ? तर्हि कृतित्वेन कार्यत्वेन कार्यकारणभाव एवेति बोध्यम् ।

अत्रेदमवधेयम्—कार्यं प्रति कर्ता कारणमिति स्वीकारे कर्तृत्वं कारणताऽवच्छेदकम् । तच्च कृतिमत्त्वं, कृतिमत्त्वं च कृतिरेव, सा च नानेति गौरवम् । अतः कार्यं प्रति कृतिः कारणम् । तथाच कृतित्वं कारणताऽवच्छेदकं, तच्च नानाकृतिष्वेकमिति लाघवम् । मूले कर्तृजन्यमित्यत्र कर्तृत्वेन कार्यत्वेन कार्यकारणभाव इत्यत्र च कर्तृपदं कृतिपरमित्यलम् ।

ननु कृतित्वेन कार्यत्वेन कार्यकारणभावे मानाभावेन तदुक्तानुमानेऽप्यनुकूलतर्काभावः न चान्वयव्यतिरेकावेव मानमिति वाच्यम्,

कुलालकृतिसत्त्वे घटः कुलालकृत्यभावे घटाभाव इति विशिष्यैवान्वयव्यतिरेकग्रहेण विशिष्यैव कुलालत्वेन घटत्वेन कार्यकारणभावग्रहात् सामान्यतः कृतित्वेन कार्यत्वेन कार्यकारणभावग्रहे मानाभावात् ।

न च विशेषतः कार्यकारणभावग्रहे 'यद्विशेषयोः कार्यकारणभावस्तत्सामान्ययोरपीति' न्याय एव सामान्यतः कार्यकारणभावे मानमिति वाच्यम्,

उक्तन्याये मानाभावेन सामान्यतः कार्यकारणभावासिद्धेः ।

न च कार्याभावस्य कारणाभावप्रयोज्यतानियमेन कार्यं प्रति कृतित्वेन कारणताऽनङ्गीकारे कार्याभावः किंप्रयोज्य इति प्रश्ने तत्तत्कृत्यभावकूटप्रयोज्य इत्युत्तरकरणे गौरवभिया सामान्यतः कार्यकारणभावस्यावश्यमङ्गीकर्तव्यतया च कार्याभावः किंप्रयोज्य इति प्रश्ने कृत्यभावप्रयोज्य इत्युत्तरकरणे लाघवमित्येव तन्यायबीजामति वाच्यम्,

कार्याभावः कारणाभावप्रयोज्य इति नियमस्यास्वीकारेण स्वरूपसंबन्धरूपप्रयोजकत्वं प्रतीत्यनुरोधेनलब्धनतिप्रसक्तधर्मावच्छेदेन कल्प्यतं इति नियमस्य स्वीकारणे च कृतित्वेन कार्यत्वेन कार्यकारणभावानङ्गीकारेऽपि कार्याभावः कृत्यभावप्रयोज्य इत्युत्तरस्य वक्तुं शक्यतया यद्विशेषयोरिति न्याये मानाभावादिति चेद् ?

अत्रोच्यते—कुलालकृतित्वेन घटत्वेन कार्यकारणभावस्वीकारेऽपि सर्गाद्यकालीनो घटः कुलालकृतिजन्यो घटत्वादित्यनुमानेनैवेश्वरसिद्धेः ।

न चेश्वरस्य कुलालत्वापत्तिः, नमः कुलालेभ्यो नमः कर्मारेभ्य इति श्रुत्या तस्येष्टत्वावगमात् ।

एवं चानुमानेश्वरसिद्धौ तदुच्चारिता द्यावाभूमी जनयन्निति श्रुतिरपीश्वरसद्भावे प्रमाणमिति दिक् ।

इतीश्वरवादः ॥ १ ॥

पदार्थान्विभजते—

द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम् ।
समवायस्तथाऽभावः पदार्थाः सप्त कीर्तिताः ॥ २ ॥

अत्र सप्तमस्याभावत्वकथनादेव षण्णां भावत्वं प्राप्तं तेन भावत्वेन पृथगुपन्यासो न कृतः । एते च पदार्था वैशेषिके प्रसिद्धा नैयायिकानामप्यविरुद्धाः । प्रतिपादितं चैवमेव भाष्ये । अत एवोपमानचिन्तामणौ सप्तपदार्थभिन्नतया शक्तिसादृश्यादीनामतिरिक्तपदार्थत्वमाशङ्कितम् ।

ननु कथमेत एव पदार्थाः शक्तिसादृश्यादीनामप्यतिरिक्तपदार्थत्वात् ?

---

मुक्तावलीमयूखः ।

द्रव्यं गुणस्तथेति । कर्मणः संयोगेऽन्तर्भाव इति केचित् । तद्दूषणाय तथेत्युक्तम् । यथा गुणः पदार्थस्तथा कर्मापीति भावः । एवमभावस्याधिकरणात्मकत्वं न तु पदार्थान्तरत्वमिति प्रभाकरमतदूषणाय समवायस्तथाऽभाव इत्यत्रापि तथाशब्द उक्त इति बोध्यम् ।

ननु प्राचां ग्रन्थेषु पदार्थो द्विविधः—भावोऽभावश्चेत्युक्तं तद्वदिहापि कुतो नोच्यतेऽत आह—सप्तमस्याभावत्वकथनादिति ।

ननु सप्तमस्याभावत्वकथनेन कथं तदितरेषां भावत्वं प्राप्तम् ? न हि कस्यचिद् ब्राह्मणत्वे प्रतिपादिते तदितरस्याब्राह्मणत्वं प्रतिपादितं भवतीति चेद् ?

उच्यते, स्वसमभिव्याहृतपदार्थताऽवच्छेदकव्याप्यमिथोविरुद्धयावद्धर्मप्रकारकबोधानुकूलव्यापारस्यैव विभागपदार्थतया प्रकृते सप्तमस्याभावत्वे तदन्यस्य द्रव्यादेरप्यभावत्वे पदार्थान् विभजत इति प्रयोगानुपपत्तिरतस्तदन्यस्यार्थाद् भावत्वं प्राप्तमित्याशयः ।

समन्वयस्तु—स्वं विपूर्वकभजधातुः, तत्समभिव्याहृतं पदं पदार्थपदं, तदर्थताऽवच्छेदकं पदार्थत्वं, तद्व्याप्यं मिथो विरुद्धं च द्रव्यत्वादिकं, तत्प्रकारकबोधानुकूलो व्यापारः द्रव्यं गुणः कर्मेत्यादिशब्दप्रयोगरूपः ।

एवं द्रव्याणि विभजत इत्यत्रापि बोध्यम्

व्याप्येत्यस्यानुपादाने द्रव्याणि विभजत इति प्रतिज्ञाय गुणः पृथिवी जलं तेज इत्यादिशब्दप्रयोगस्यापि विभागत्वं स्यात् । मिथोविरुद्धेत्यस्यानुपादाने घटः पृथिवीत्यादिशब्दप्रयोगस्यापि तत्त्वं स्यात् । यावदित्यस्यानुपादाने पृथिवी जलं तेज इत्येतन्मात्रशब्दप्रयोगस्यापि विभागत्वं स्यादिति बोध्यम् ।

ननु यदि दाहं प्रति वह्नेरेव कारणता स्यात् तर्हि(१)प्रतिबन्धकचन्द्रकान्तमणिसमवधाने दाहः किं न जायतेऽतः कारणान्तरमपि कल्पनीयम् । तच्च शक्तिरूपम् । सा च शक्तिस्त्रिधा—सहजा शक्तिराधेयशक्तिः पदशक्तिश्चेति । आद्या वह्न्यादिनिष्ठा । प्रोक्षणादिजन्या व्रीह्यादिनिष्ठा शक्तिर्द्वितीया । तत्तदर्थनिरूपिता तत्तत्पदनिष्ठा शक्तिस्तृतीया । तथाच दाहं प्रति दाहानुकूलशक्तेर्वह्नेश्च कारणतेति स्वीकारेण प्रतिबन्धकसमवधाने वह्निनिष्ठा दाहानुकूला शक्तिर्नश्यतीति शक्तिरूपसहकारिकारणविरहादेव दाहो नोपजायते । प्र-

---

(१) कार्यप्रयोजकीभूताभावप्रतियोगित्वं प्रतिबन्धकत्वम्

तथाहि, मण्यादिसमवहितेन वह्निना दाहो न जन्यते, तच्छून्येन तु जन्यते। तत्र मण्यादिना वह्नौ दाहानुकूला शक्तिर्नाश्यते, उत्तेजकेन मण्याद्यपसारणेन च जन्यत इति कल्प्यते।

एवं सादृश्यमप्यतिरिक्तः पदार्थः, तद्धि न षट्सु भावेष्वन्तर्भवति सामान्येऽपि सत्त्वात्, यथा गोत्वं नित्यं तथाऽश्वत्वमपीति सादृश्यप्रतीतेः, नाप्यभावे सत्त्वेन प्रतीयमानत्वादिति चेद् ?

भाव लिंग

मुक्तावलीमयूखः।

तिबन्धकापसारण उत्तेजकसूर्यकान्तमणिसमवधाने वा शक्तिरुत्पद्यत इति दाह उपपद्यते। सा शक्तिर्न द्रव्यगुणकर्मान्यतमरूपा गुणादिवृत्तित्वाद्, नापि सामान्याद्यन्यतमरूपा उत्पत्तिमत्त्वे सति विनाशित्वात्, प्रागभावध्वंसयोर्व्यभिचारवारणाय क्रमेण दलद्वयम्; इति शक्तेः षट्पदार्थेष्वनन्तर्भावात्पदार्थः सप्तविध इति कथनमसङ्गतमिति चेद् ?

न प्रतिबन्धकमण्यभावविशिष्टवह्नेरेव दाहं प्रति कारणताऽङ्गीकारेण प्रतिबन्धकसमवधाने प्रतिबन्धकमण्यभावविशिष्टवन्हिरूपकारणाभावादेव दाहाभावोपपत्तौ वह्नौ शक्तिकल्पने मानाभावेन शक्तेरतिरिक्तत्वादिशङ्काया दूरापास्तत्वात्।

न च विनिगमनाविरहेण विशेषणविशेष्यभावव्यत्यासेन मण्यभावविशिष्टवह्नेर्वह्निविशिष्टमण्यभावस्य वा कारणताऽऽपत्त्या मण्यभावविशिष्टवह्नित्वस्य वह्निविशिष्टमण्यभावत्वस्य च कारणताऽवच्छेदकत्वकल्पने गौरवं, शक्तित्वस्य वह्नित्वस्य च तत्कल्पने लाघवमिति वाच्यम्,

ममापि दाहं प्रतिमण्यभावो वह्निश्च कारणमिति स्वातन्त्र्येण कार्यकारणभावस्वीकारेण गौरवाभावात्।

(१) न चोत्तेजकसत्त्वे प्रतिबन्धकसद्भावे कथं दाह इति वाच्यम्,

उत्तेजकाभावविशिष्टमण्यभावस्य हेतुताऽङ्गीकारेण दोषाभावात्। तथाहि, विशिष्टाभावस्त्रिधा—विशेषणाभावप्रयोज्यः विशेष्याभावप्रयोज्यः उभयाभावप्रयोज्यश्चेति। अयोध्यास्थे ब्राह्मणे काशीस्थत्वरूपविशेषणाभावप्रयोज्यः काशीस्थत्वविशिष्टब्राह्मणत्वाभावः। काशीस्थशूद्रे काशीस्थत्वरूपविशेषणस्य सत्त्वेऽपि ब्राह्मणत्वरूपविशेष्यस्याभावाद् विशेष्याभावप्रयुक्तो विशिष्टाभावः। अयोध्यास्थे काशीस्थत्वरूपविशेषणस्य ब्राह्मणत्वरूपविशेष्यस्य चाभावाद् शूद्र उभयाभावप्रयुक्तः। एवं प्रकृत उत्तेजकप्रतिबन्धकवह्नीनां समवधान उत्तेजकाभावरूपविशेषणासत्त्वेन विशेषणाभावप्रयुक्तो विशिष्टाभावः, वह्निमात्रसत्त्वे उत्तेजकाभावरूपविशेषणस्य सत्त्वेऽपि मणिरूपविशेष्यस्याभावेन विशेष्याभावप्रयुक्तो विशिष्टाभावः, उत्तेजकस्य वह्नेश्च सत्त्व उत्तेजकाभावरूपविशेषणस्य मणिरूपविशेष्यस्य चाभावादुभयाभावप्रयुक्तो विशिष्टाभाव इति त्रिषु स्थलेषु दाहः। यत्र प्रतिबन्धकवह्नी तत्रोत्तेजकाभावविशिष्टमणेरेव सद्भावान्न दाहः। किञ्च शक्तेरनन्तावयवध्वंसादिकल्पने गौरवं च स्यादिति दिक्।

(१) प्रतिबन्धकसमानकालीनकार्यजनकत्वमुत्तेजकत्वम्।

न, मण्याद्यभावविशिष्टवह्न्यादेर्दाहादिकं प्रति स्वातन्त्र्येण मण्यभावादेरेव वा हेतुत्वं कल्प्यते । अनेनैव सामञ्जस्येऽनन्तशक्तितत्प्रागभावध्वंसकल्पनाऽनौचित्यात् ।

न चोत्तेजके सति प्रतिबन्धकसद्भावेऽपि कथं दाह इति वाच्यम्, उत्तेजकाभावविशिष्टमण्यभावस्य हेतुत्वात् ।

सादृश्यमपि न पदार्थान्तरं किंतु तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम् । यथा चन्द्रभिन्नत्वे सति चन्द्रगताह्लादकत्वादिमत्वं मुखे चन्द्रसादृश्यमिति ॥२॥

---

मुक्तावलीमयूखः ।

शक्तिवादिनां मीमांसकानां त्विदमाकूतम्—वन्हिं प्रति तृणस्यारणेर्मणेश्च कारणतेति तृणाभावे मणिना मण्यभावेऽरणिना तदभावे तृणेन च वह्नेर्जननाद् व्यभिचारेण कस्यापि कारणत्वं न स्यादिति तत्तद्व्यक्तिहितोत्तरत्वमन्तर्भाव्य कार्यकारणभावो वाच्यस्तार्किकैः, अस्माकं तु वह्न्यनुकूलशक्तिमत्त्वेनानुगमसंभवान्न व्यभिचारो न वा गौरवम् । किं च शून्यस्य अभावस्य कुत्रापि कारणत्वानङ्गीकारेण दाहं प्रति मण्यभावस्य कारणत्वानुपपत्तिः । किं चास्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छायाः पदशक्तित्वे पदस्य गुणत्वेन गुणे गुणानङ्गीकारेण पदनिष्ठत्वानुपपत्तिः । कारणे कंचिदतिशयमनापादयतो मणेः प्रतिबन्धकत्वानुपपत्तिश्च । अस्माकं तु शक्तिरूपकारणविघटनेनैव मणेः प्रतिबन्धकत्वमिति ।

उत्तेजकाभावविशिष्टेति । वैशिष्ट्यं सामानाधिकरण्यसंबन्धेन । अयम्भावः अभावीयविशेषणतासंबन्धेन रूपध्वंसरूपदाहं प्रति उद्देश्यता—दैशिकविशेषणतान्यतरसंबन्धावच्छिन्नप्रतियोगिताकानां तत्तदुत्तेजकाभावानां सामानाधिकरण्यरूपं यद्वैशिष्ट्यं तदवच्छिन्नस्य मण्यादेर्दैशिकविशेषणतोद्देश्यतान्यतरसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य अभावीयविशेषणतासंबन्धेन हेतुत्वमिति । मन्त्रस्य वह्न्यधिकरणदेशे उद्देश्यतासंबन्धेनैव सत्त्वादुद्देश्यतानिवेशः । मण्यादिरूपोत्तेजकस्य संयोगेन वह्न्यधिकरणदेशेसत्त्वेऽपि किंचिदवच्छेदेन संयोगेन तदभावसत्त्वाद्दाहानुपपत्तिरतो दैशिकविशेषणतेत्यस्य निवेशः । दैशिकविशेषणतया तु न द्रव्यस्याव्याप्यवृत्तित्वमिति न दाहानुपपत्तिरिति ।

ननु देवदत्तसदृशो यज्ञदत्त इति प्रतीत्या सादृश्यमपि पदार्थः । तच्च सादृश्यं षड्भावानन्तर्भूतं सामान्येतरवृत्तित्वे सति सामान्यवृत्तित्वात् । सामान्यत्वे व्यभिचारवारणाय सत्यन्तम् । गुणे व्यभिचारवारणाय विशेष्यम् । यथा गोत्वं नित्यं तथाऽश्वत्वमपीति प्रतीत्या सादृश्यस्य सामान्यवृत्तित्वं बोध्यम् । प्रमेयत्वे व्यभिचारवारणाय व्यतिरेकित्वे सतीति देयम् । सादृश्यमभावानन्तर्भूतं सत्त्वेन प्रतीयमानत्वादित्यनुमानाभ्यां सादृश्यस्य सप्तपदार्थानन्तर्गततया सप्तैव पदार्था इति कथनमसङ्गतमेवेति चेद् ?

न, तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वस्यैव सादृश्यरूपतया घटसदृशः पट इत्यादौ जातौ, यथा गोत्वं नित्यं तथाऽश्वत्वमपीत्यादौ चन्द्रसदृशं मुखमित्यादौ च नित्यत्वाल्हादकत्वादिरूपोपाधौ सादृश्यस्यान्तर्भावेणातिरिक्तत्वशङ्काऽनवकाशात् ।

ननूपाधीनां कुत्रान्तर्भाव इति चेद् ? न कुत्रापीति केचित् ।

द्रव्याणि विभजते—

क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः ।

द्रव्याणि,

क्षित्यबित्यादि । क्षितिः पृथिवी, आपो जलानि, तेजो वह्निः, मरुद् वायुः, व्योम आकाशः, कालः समयः, दिग् आशा, देही आत्मा, मन एतानि नव द्रव्याणीत्यर्थः ।

ननु द्रव्यत्वजातौ किं मानम् ? न हि तत्र प्रत्यक्षं प्रमाणं, घृतजतुप्रभृतिषु द्रव्यत्वाग्रहादिति चेद् ?

मुक्तावलीमयूखः ।

न च तेषां सप्तपदार्थानन्तर्गतत्वे सप्तपदार्था इति कथनासंगतिरितिवाच्यम्, तत्त्वज्ञानोपयोगिनां पदार्थानामेवेह विभाज्यत्वेनाभिमततयोपाधीनामकथनेऽपि क्षत्यभावात् ।

वर्द्धमानोपाध्यायास्तु 'सामान्यं द्विविधं जातिरुपाधिश्च' इत्युक्त्वा सामान्येऽन्तर्भावमुपाधीनां वदन्ति ॥ २ ॥

क्षयार्थकक्षिधातोः 'स्त्रियां क्तिन्' इति क्तिन्प्रत्ययनिष्पन्नक्षितिशब्दस्य क्षयवाचकत्वात् प्रकृतोपयुक्तमर्थमाह—क्षितिः पृथिवीति । क्षीयन्ते जना अस्यामिति बाहुलकादधिकरणे क्तिन्निति भावः । 'अप्तृन्' इतिपाणिनिसूत्रेऽप्शब्दे शब्दपरत्वस्य दृष्टतया प्रकृते शब्दपरत्वशङ्काव्युदासायाह—आपो जलानीति । 'स प्रभावः प्रतापश्च यत्तेजः कोशदण्डजम्' इतिकोशात्प्रतापस्यापि तेजःशब्दवाच्यतया प्रकृते तेजःपदार्थमाह—तेजो वह्निरिति । देवविशेषस्यापि मरुच्छब्दवाच्यतया प्रकृते मरुच्छब्दार्थमाह—मरुद्वायुरिति । 'परमे व्योमन्' इति श्रुतौ व्योमशब्दस्य ब्रह्मणि प्रयोगादाह—व्योम आकाश इति । कालशब्दस्य यमे प्रसिद्धत्वादाह—कालः समय इति । अतिसर्जनार्थकदिश्धातुनिष्पन्नदिक्शब्दस्य दानार्थकत्वादाह—दिग् आशेति । ईश्वरस्य देहाभावाद् देहिपदेन संग्रहो न स्यादत आह—देही आत्मेति । मनश्शब्देऽन्यार्थपरत्वशङ्काया अभावेन तत्पर्यायप्रदर्शनं ग्रन्थकृता न कृतमिति ध्येयम् ।

ननु कारिकावल्यामितः प्राङ्मुक्तावल्यां वा द्रव्यत्वस्य तज्जातित्वस्य वाऽनुक्ततया द्रव्यत्वजातौ किम्मानमिति शङ्कोत्थितिः कथमिति चेद् ?

उच्यते, मूले द्रव्याणीत्युक्तं तत्र द्रव्याणीत्यस्य यदि गुणवन्तीत्यर्थस्तदा गुणानां शक्यताऽवच्छेदकत्वे गौरवम्, 'उत्पन्नं द्रव्यं क्षणमगुणं निष्क्रियं च तिष्ठति' इति नियमेनोत्पन्नघटे द्रव्यशब्दप्रयोगानुपपत्तिश्चातो द्रव्याणीत्यस्य द्रव्यत्वजातिविशिष्टानीत्यर्थो वाच्यः । तदा च द्रव्यत्वस्य शक्यताऽवच्छेदकतया न गौरवम्, न चोत्पन्नघटे द्रव्यशब्दप्रयोगानुपपत्तिर्द्रव्यत्वजातेस्तत्र सत्त्वात् ।

एवं च द्रव्याणीत्यनेन द्रव्यत्वजातेरुपस्थित्या द्रव्यत्वजातौ किं मानमिति शङ्काकरणमुचितमेवेति बोध्यम् ।

ननु द्रव्यत्वजातौ किं मानम् ?

मुक्तावलीमयूखः ।

न च यथा "अयं घटः अयं घटः" इति समानाकारप्रतीत्या घटत्वजातिः प्रत्यक्षा तथा "इदं द्रव्यम् इदं द्रव्यम्" इति समानाकारप्रतीत्या द्रव्यत्वजातिरपि प्रत्यक्षेति वाच्यम् ?

(१)घृतजतुप्रभृतिषु पण्डितानामिदं द्रव्यमितिप्रतीतिसद्भावेऽपि पामराणामिदंद्रव्यमिति प्रतीत्यभावेनाऽऽपामरप्रसिद्धानुगतप्रतीतेरेव जातिसाधकतया प्रकृते तस्या अभावेन प्रत्यक्षप्रमाणेन द्रव्यत्वजातिसिद्धेरयोगादिति चेद् ?

न, गुणे गुणोत्पत्तिवारणाय समवायेन कार्यं प्रति तादात्म्येन द्रव्यं कारणमिति कार्यकारणभावस्यावश्यकतया समवायसंबन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नद्रव्यनिष्ठकारणता लभ्यते । ततश्च यत्र यत्र कारणतात्वं तत्र तत्र किञ्चिद्धर्मावच्छिन्नत्वमिति दण्डादिनिष्ठकारणतादौ सहचारदर्शनेन कारणतात्वं किञ्चिद्धर्मावच्छिन्नत्वव्याप्यमिति व्याप्तिज्ञानं जायते । ततः कारणतात्ववत्येषा द्रव्यनिष्ठा कारणतेति पक्षधर्मताज्ञानम् । ततः किञ्चिद्धर्मावच्छिन्नत्वव्याप्यकारणतात्ववत्येषाकारणतेति परामर्शज्ञानम् । ततः समवायसंबन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्ना द्रव्यनिष्ठा कारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वाद् दण्डत्वावच्छिन्नदण्डनिष्ठकारणतावदित्यनुमानेन किञ्चिद्धर्मावच्छिन्नत्वसिद्धौ यद्धर्मावच्छिन्ना द्रव्यनिष्ठा कारणता तदेव द्रव्यत्वमिति द्रव्यत्वजातिसिद्धेः ।

न च पदार्थत्वं घटत्वं वा द्रव्यनिष्ठकारणताऽवच्छेदकमस्त्विवति वाच्यम् ,

अन्यूनानतिप्रसक्तधर्मस्यैवावच्छेदकत्वमिति नियमेन पदार्थत्वस्य द्रव्यनिष्ठकारणताऽतिरिक्तवृत्तित्वेन घटत्वस्य च द्रव्यनिष्ठकारणतान्यूनवृत्तित्वेनावच्छेदकत्वासंभवात् ।

नचान्यूनानतिप्रसक्तधर्मस्यैवावच्छेदकत्वाङ्गीकारे दण्डनिष्ठकारणताऽवच्छेदकं दण्डत्वमपि न स्याद् , अनन्यथासिद्धकार्यनियतपूर्ववर्तित्वरूपकारणत्वाभाववत्यरण्यस्थदण्डे दण्डत्वस्य सत्त्वेनातिप्रसक्तत्वादिति वाच्यम् ,

अनन्यथासिद्धकार्यनियतपूर्ववर्तिजातीयत्वरूपकारणत्वस्यारण्यस्थदण्डेऽपि सत्त्वेन दण्डत्वस्य कारणतातिरिक्तवृत्तित्वाभावात् । घटनियतपूर्ववर्त्तिदण्डे फलोपधायकतारूपा; अरण्यस्थदण्डे स्वरूपयोग्यतारूपा कारणतेत्यन्यदेतत् । दण्डत्वस्य कारणताऽवच्छेदकत्वसिद्ध्यर्थमेव स्वरूपयोग्यतारूपा कारणताऽरण्यस्थदण्डे स्वीक्रियत इति ध्येयम् ।

ननु समवायेन नीलं प्रति स्वाश्रयसमवेतद्रव्यत्वसम्बन्धेन नीलस्य हेतुतास्वीकारेण नीले नीलोत्पत्तिवारणसम्भवे समवायेन कार्यं प्रति तादात्म्येन द्रव्यं कारणमिति कार्यकारणभावे मानाभाव; किञ्च प्रागभावप्रतियोगित्वरूपकार्यत्वस्य ध्वंससाधारण्येनातिरिक्तवृत्तितया समवायसम्बन्धावच्छिन्नकार्यताऽवच्छेदकत्वासम्भवः, सत्त्वे सति प्रागभावप्रति-

---

(१)ननु घटादावित्येव कुतो नोक्तमितिचेत् ? न, अनुगतप्रतीत्यभावसूचनाय तदुपादानात् । तथाहि, अनुगताकृतिव्यङ्ग्या मनुष्यत्वादिजातिः नहि नवसु द्रव्येषु काचिदेकाकृतिरस्ति घृतादिष्वेकैकद्रव्येष्वपि सर्वदा नैकाकृतिः किमुत नवसु द्रव्येषु इति अनुगताकृत्या द्रव्यत्वं न सेत्स्यतीतिभावः ।

न, कार्यसमवायिकारणताऽवच्छेदकतया संयोगस्य विभागस्य वा समवायिकारणताऽवच्छेदकतया द्रव्यत्वजातिसिद्धेरिति ।

ननु दशमं द्रव्यं तमः कुतो नोक्तम् ? तद्धि प्रत्यक्षेण गृह्यते । तस्य च रूपवत्त्वात् कर्मवत्त्वाच्च द्रव्यत्वम् । तद्धि गन्धशून्यत्वान्न पृथिवी, नीलरूपवत्त्वाच्च

---

मुक्तावलीमयूखः ।

योगित्वरूपकार्यत्वस्यावच्छेदकत्वे च गौरवमिति नोक्तानुमानसम्भव इत्यरुचेराह—संयोगस्येति ।

अयं भावः—'समवायेन संयोगं प्रति तादात्म्येन द्रव्यं कारणम्', इति कार्यकारणभावस्वीकारेण समवायसम्बन्धावच्छिन्नसंयोगत्वावच्छिन्नकार्यतानिरूपिता या तादात्म्यसम्बन्धावच्छिन्ना द्रव्यनिष्ठा कारणता सा किंचिद्धर्मावच्छिन्ना कारणतात्वादित्यनुमानेन द्रव्यत्वजातिसिद्धिरिति ।

ननु रूपादीनपहाय संयोगपर्यन्तमनुधावनं किमर्थमिति चेद् ?

उच्यते, रूपरसगन्धस्पर्शनिरूपितकारणतायाः नवद्रव्यसाधारण्याभावात् संख्यापरिमाणपृथक्त्वनिरूपितकारणताया नवद्रव्यसाधारण्येऽपि संख्यात्वादीनां नित्यानित्यवृत्तितया कार्यतातिरिक्तवृत्तित्वेन कार्यताऽवच्छेदकत्वासम्भवाद् रूपादिकारणताऽवच्छेदकतया द्रव्यत्वजातिसिद्ध्यसम्भव इति ।

ननु विभुद्वयसंयोगस्य नित्यतया तदङ्गीकर्तृमते संयोगत्वस्यापि नित्यानित्यवृत्तितया कार्यताऽवच्छेदकत्वासम्भवेनोक्तानुमानासम्भव इत्यरुचेराह—विभागस्येति ।

समवायेन विभागं प्रति तादात्म्येन द्रव्यं कारणमिति स्वीकारेण समवायसम्बन्धावच्छिन्नविभागत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नद्रव्यनिष्ठकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वाद् दण्डत्वावच्छिन्नदण्डनिष्ठकारणतावदित्यनुमानेन द्रव्यत्वजातिसिद्धिरिति भावः ।

ननु नीलं तमश्चलतीतिप्रतीत्या चाक्षुषप्रत्यक्षसिद्धतमसः तमो द्रव्यं रूपवत्त्वात्कर्मवत्त्वाच्चेत्यनुमानेन द्रव्यत्वसिद्धौ तमः पृथिवीत्वाभाववद्गन्धशून्यत्वात्, तमो न जलाद्यन्यतमरूपं नीलरूपवत्त्वादित्यनुमानाभ्यां क्लृप्तनवद्रव्येष्वन्तर्भावाभावाद्दशमं द्रव्यं तमः कुतो नोक्तम् ?

न च चाक्षुषप्रत्यक्षे आलोकसहकृतचक्षुषः कारणत्वात्तमसः कथं चाक्षुषत्वमिति वाच्यम् ?

वस्तुस्वभावात्तमश्चाक्षुषे आलोकनिरपेक्षस्यैव चक्षुषः कारणत्वाभ्युपगमेनादोषादिति चेद् ?

न, तमसस्तेजोऽभावरूपताऽङ्गीकारेणैवोपपत्तौ द्रव्यान्तरकल्पनाया अनुचितत्वात् । रूपवत्त्वप्रतीतिर्भ्रमरूपा कर्मवत्त्वप्रतीतिरप्यालोकापसरणौपाधिकी भ्रान्तिरेवेति न रूपवत्त्वकर्मवत्त्वहेतुभ्यां द्रव्यत्वं साधयितुमलम् ।

ननु प्रतीतेर्भ्रान्तित्वं तत्रैव स्वीक्रियते यत्रोत्तरकाले बाधः, प्रकृते च न तथेति कथं भ्रान्तित्वमिति चेद् ?

न जलादिकम् । तत्प्रत्यक्षे चालोकनिरपेक्षं चक्षुः कारणमिति चेद् ?

न, आवश्यकतेजोऽभावेनैवोपपत्तौ द्रव्यान्तरकल्पनाया अन्याय्यत्वात् । रूपवत्ताप्रतीतिस्तु भ्रमरूपा, कर्मवत्ताप्रतीतिरप्यालोकापसरणौपाधिकी भ्रान्तिरेव । तमसोऽतिरिक्तद्रव्यत्वेऽनन्तावयवादिकल्पनागौरवं च स्यात् । स्वर्णस्य यथा तेजस्यन्तर्भावस्तथा वक्ष्यते ।

गुणान्विभजते—

अथ गुणा रूपं रसो गन्धस्ततः परम् ॥ ३ ॥
स्पर्शः संख्या परिमितिः पृथक्त्वं च ततः परम् ।
संयोगश्च विभागश्च परत्वं चापरत्वकम् ॥ ४ ॥
बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम् ।
द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च ॥ ५ ॥

अथ गुणा इति । एते गुणाश्चतुर्विंशतिसंख्याकाः कणादेन कण्ठतश्चशब्देन च दर्शिताः । तत्र गुणत्वजातिसिद्धिरग्रे वक्ष्यते ॥ ३-५ ॥

कर्माणि विभजते—

उत्क्षेपणं ततोऽपक्षेपणमाकुञ्चनं तथा ।
प्रसारणं च गमनं कर्माण्येतानि पञ्च च ॥ ६ ॥

उत्क्षेपणमिति । कर्मत्वजातिस्तु प्रत्यक्षसिद्धा । एवमुत्क्षेपणत्वादिकमपि६॥

---

मुक्तावलीमयूखः ।

न, तमसोऽतिरिक्तद्रव्यत्वाङ्गीकारेऽनन्तावयवादिकल्पने गौरवापत्त्या लाघवार्थं प्रतीतेर्भ्रमत्वस्यैवौचित्यात् ।

ननु तम एव द्रव्यं तेज एव तमोऽभाव इति चेद् ?

न, उष्णस्पर्शवत्त्वप्रतीत्यन्यथाऽनुपपत्त्या तेजसोऽभावरूपताया अङ्गीकर्तुमशक्यत्वात् । इदमेव सूचयितुमावश्यकतेजोऽभावेनेत्यावश्यकत्वं तेजोविशेषणमुपात्तमित्यलम् ।

ननु 'रूपरसगन्धस्पर्शाः संख्यापरिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः' इति वैशेषिकसूत्रे सप्तदशैव गुणा उक्ता इह कथं चतुर्विंशतिर्गुणा इत्युक्तमत आह—एते गुणा इति ।

ननु गुणत्वजातौ किं मानमिति चेद् ?

उच्यते, द्रव्यकर्मभिन्ने सामान्यवति या कारणता सा किञ्चिद्धर्मावच्छिन्ना कारणतात्वादित्यनुमानेन गुणत्वजातिसिद्धिरिति ।

नन्वणुपरिमाणस्य कुत्राप्यकारणतया गुणत्वस्य तत्साधारण्यं न स्यादिति चेद् ?

न, गुणपदशक्यताऽवच्छेदकविधया गुणत्वजातिसिद्धेरिति ।३।४।५॥

नन्वत्र भ्रमणादिकमपि पञ्चकर्माधिकतयाकुतो नोक्तमत आह—

भ्रमणं रेचनं स्यन्दनोर्ध्वज्वलनमेव च ।
तिर्यग्गमनमप्यत्र गमनादेव लभ्यते ॥ ७ ॥

भ्रमणमित्यादि ॥ ७ ॥

सामान्यं निरूपयति—

सामान्यं द्विविधं प्रोक्तं परं चापरमेव च ।
द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ॥ ८ ॥

सामान्यमिति । तल्लक्षणं तु नित्यत्वे सत्यनेकसमवेतत्वम् । अनेकसमवेतत्वं संयोगादीनामप्यस्त्यत उक्तं नित्यत्वे सतीति । नित्यत्वे सति समवेतत्वं गगनपरिमाणादीनामप्यस्त्यत उक्तमनेकेति । नित्यत्वे सत्यनेकवृत्तित्वमत्यन्ताभावेऽप्यस्त्यतो वृत्तित्वसामान्यं विहाय समवेतत्वमित्युक्तम् ।

---

मुक्तावलीमयूखः ।

भ्रमणमितीति । ननु भ्रमणादिष्विवोत्क्षेपणादिष्वपि 'ऊर्ध्वं गच्छति' इतिप्रत्ययादुत्क्षेपणादीनामपि गमनेऽन्तर्भावोऽस्त्विति चेद् ?

न, प्रकृते उत्क्षेपणादिभिन्नत्वे सत्युत्तरदेशसंयोगानुकूलक्रियात्वस्यैव गमनपदार्थतया तत्रोत्क्षेपणादीनामन्तर्भावस्य कर्तुमशक्यत्वात् । उत्तरदेशसंयोगानुकूलक्रियात्वस्यैव गमनत्वमङ्गीकृत्यान्तर्भावशङ्का तु कर्तुमशक्या, स्वतन्त्रेच्छस्य मुनेर्नियोगपर्यनुयोगानर्हत्वादित्यलम् ।६॥७॥

'व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्' इत्यभियुक्तोक्त्या लक्षणस्य सप्रयोजनत्वादाह—तल्लक्षणं त्विति ।

नित्यत्वसमानाधिकरणानेकनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तिताऽश्रयत्वं सामान्यत्वमित्यर्थः । समवागादिति समवेत इति व्युत्पत्त्या समवपूर्वकेण्धातोः समवायोऽर्थः, क्तप्रत्यस्य वृत्तिताऽऽश्रयोऽर्थः, वृत्तितायां समवायस्यावच्छिन्नत्वसम्बन्धेनान्वयः, तत उक्तार्थलाभ इति ध्येयम् ।

ननु विभुद्वयसंयोगाङ्गीकर्तृमते नित्यसंयोगेऽतिव्याप्तिरिति चेद् ?

न, विभुद्वयसंयोगस्यानङ्गीकारात् । अन्यथा तुल्ययुक्त्या नित्यविभागस्यापि सिद्धिप्रसङ्गात् ।

केचित्तु—तत्रातिव्याप्तिवारणाय संयोगभिन्नत्वे सतीति देयमिति वदन्ति ।

अपरे तु—एकत्वे सतीतिविशेषणदानान्न तत्र दोषः । अत एव तर्कसंग्रहे नित्यमेकमनेकानुगतं सामान्यमितिलक्षणे एकमिति विशेषणमुपात्तम् । तच्च संयोगे नास्तीति वदन्ति ।

परे तु—अनेकसमवेतत्वमित्यत्रानेकपदं बहुपरं संयोगश्च द्विसमवेत एव न बहुसमवेत इति न दोष इति प्राहुः ।

एकव्यक्तिमात्रवृत्तिस्तु न जातिः। तथा चोक्तम्—

"व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः।
रूपहानिरसंबन्धो जातिबाधकसंग्रहः" ॥

द्रव्यादीति। परत्वमधिकदेशवृत्तित्वम्। अपरत्वमल्पदेशवृत्तित्वम्। सकलजात्यपेक्षयाऽधिकदेशवृत्तित्वात् सत्तायाः परत्वं, तदपेक्षया चान्यासां जातीनामपरत्वम् ॥ ८ ॥

---

मुक्तावलीमयूखः।

ननु निःसामान्यत्वे सति विशेषान्यत्वे सति समवेतत्वं सामान्यलक्षणं प्राचामभिमतम्। तत्र समवेतघटादावतिव्याप्तिवारणायाद्यं सत्यन्तम्। विशेषेऽतिव्याप्तिवारणाय द्वितीयं सत्यन्तम्। समवायाभावयोरतिव्याप्तिवारणाय विशेष्यम्। ततश्चाकाशत्वमपि जातिरिति प्रतीयते; नित्यत्वे सत्यनेकसमवेतत्वलक्षणं तु न तत्र गतमित्यव्याप्तिर्लक्षणस्येति कस्यचिच्छङ्कामपनुदति—एकव्यक्तिमात्रवृत्तिरित्यादिना।

जातिसाधिकाया अनेकव्यक्तिष्वनुगतधियोऽभावादाकाशत्वं न जातिरिति भावः।

अमुमर्थं प्रमाणयति—व्यक्तेरभेद इत्यादिना। व्यक्तेरित्यत्र निष्ठत्वं षष्ठ्यर्थः, तथा च स्वाश्रयीभूतव्यक्तिनिष्ठो भेदाभावः स्वस्य जातित्वे बाधकः। स्वमाकाशत्वं तदाश्रयीभूता व्यक्तिराकाशरूपा तत्राकाशभेदः 'आकाशं न' इति प्रतीतिसाक्षिको न वर्तते इति भेदाभावसत्त्वादाकाशत्वं न जातिः।

न चाकाशे आकाशभेदस्यासत्त्वेऽपि घटभेदस्य 'आकाशं घटो न' इतिप्रतीतिसाक्षिकस्य सत्त्वेन भेदसामान्याभावस्यासत्त्वादाकाशत्वं जातिः स्यादेवेति वाच्यम्,

भेदः स्वाश्रयीभूतव्यक्तिप्रतियोगिको ग्राह्यः। तथा च स्वाश्रयीभूतव्यक्तिनिष्ठः स्वाश्रयीभूतव्यक्तिप्रतियोगिकभेदाभावः स्वस्य जातित्वे बाधक इत्यर्थलाभेनाकाशे आकाशभेदाभावस्य सत्त्वेन आकाशत्वे जातित्वबाध इत्यदोषात्।

तुल्यत्वं तुल्यव्यक्तिवृत्तित्वं घटत्वकलशत्वादिजातीनां भेदे बाधकम्।

ननु कारिकायां जातिबाधकसंग्रह इत्युक्तं, तुल्यत्वं च जातिभेदबाधकमित्युच्यते, ततश्च कारिकाविरोध इति चेत्? तर्हि तुल्यत्वं स्वभिन्नजातिसमनियतत्वं स्वस्य जातित्वे बाधकम् इत्यर्थकरणान्न विरोधः। स्वं कलशत्वं तद्भिन्नजातिर्घटत्वं तत्समनियतत्वं कलशत्व इति कलशत्वे जातित्वबाधः 'अयं घटः अयं घटः' इत्यनुगतधियः 'अयं कलशः अयं कलशः' इत्यनुगतधियश्च घटत्वजातिं कलशत्वजातिं वाऽऽदायोपपत्तौ घटत्वकलशत्वयोरुभयोर्जातित्वस्वीकारे मानाभावस्तुल्यत्वस्य जातित्वबाधकत्वे बीजमिति बोध्यम्।

(परस्परात्यन्ताभावसमानाधिकरणधर्मयोरेकत्र समावेशः संकरः,) भूतत्वमूर्तत्वयोर्जातित्वे बाधकः। मूर्तत्वाभाव आकाशे तत्र च भूतत्वं; भूतत्वाभावो मनसि तत्र च मूर्तत्वमुभयोः पृथिव्यादिचतुष्टये समावेश इति सांकर्याद्भूतत्वं मूर्त्तत्वं वा न जातिरिति ध्येयम्। सांकर्यस्य जातिबाधकत्वे मानं तु "जातिविशिष्टजातित्वावच्छेदेन स्वसमानाधिकरणाभावप्रतियोगित्वाभाव" इति नियमस्य भङ्गप्रसङ्ग एवेति बोध्यम्। वैशिष्ट्यं च

परभिन्ना च या जातिः सैवापरतयोच्यते ।
द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥ ९ ॥
व्यापकत्वात्पराऽपि स्याद्व्याप्यत्वादपराऽपि च ।

पृथिवीत्वाद्यपेक्षया व्यापकत्वादधिकदेशवृत्तित्वाद् द्रव्यत्वादेः परत्वं,

मुक्तावलीमयूखः ।

स्वसामानाधिकरण्य स्वाभावसामानाधिकरण्योभयसंबन्धेन यदि भूतत्वमूर्तत्वे जाती स्यातां तदा जातिर्भूतत्वजातिस्तदधिकरणपृथिव्यादिवृत्तित्वस्य तदभावाधिकरणमनोवृत्तित्वस्य च मूर्तत्वजातौ सत्त्वेन जातिविशिष्टजातित्वावच्छिन्नं मूर्तत्वं जातमिति मूर्तत्वे स्वं भूतत्वं तदधिकरणाकाशनिष्ठमूर्तत्वाभावप्रतियोगित्वमेव न तु तदभाव इति नियमभङ्गःस्यात् । उक्तोभयसंबन्धेन यज्जातिविशिष्टजातित्वं यत्र तत्र तज्जातिव्यापकत्वमिति नियम इति यावत् । दृष्टश्चासौ पृथिवीत्वव्यापके द्रव्यत्वादौ, एतादृशनियमभङ्ग एव साङ्कर्यस्य जातित्वबाधकत्वे मानम् । साङ्कर्यस्थले एकमात्रस्य जातित्वेऽपि नैतादृशनियमभङ्ग इति क्रियासमवायिकारणतावच्छेदकतया सिद्धा मूर्तत्वं जातिरेवेति मन्तव्यम् ।

वस्तुतस्तु उक्तनियमे मानाभावेन सांकर्यस्य जातिबाधकत्वं नव्या न सहन्त इति बोध्यम् ।

अप्रामाणिकानन्तपदार्थकल्पनाविश्रान्तेरभावोऽनवस्था जातिवृत्तेर्जातित्वे बाधिका । घटत्वपटत्वादिजातिषु इयं जातिरियं जातिरित्यनुगतप्रतीत्या यदि काचिज्जातिरभ्युपगम्यते तदा तस्यां काचिदन्या तस्यां काचिदन्येत्येवमनवस्था स्यादिति न जातौ जातिरङ्गीकर्तव्येति भावः ।

ननु निखिलजातिषु एकस्या जातेरङ्गीकारे तस्यां न जात्यन्तरं, व्यक्तेरैक्यादित्यनवस्थाया जातिबाधकत्वं विफलमिति चेत् ? न, निखिलजातिष्वेका जातिस्तदाश्रयीभूतघटत्वादिजातिषु चैकेत्येवमनवस्थेत्याशयात् ।

रूपस्य विशेषलक्षणस्य हानिर्विशेषवृत्तीनां जातित्वे बाधिका । निःसामान्यत्वे सति सामान्यभिन्नत्वे सति समवेतत्वं हि विशेषत्वम् । यदि विशेषेषु विशेषत्वं जातिः स्यात्तदा विशेषाणां सामान्यरहितत्वाभावेन विशेषलक्षणस्यासंभवः स्यादतो विशेषत्वं जातिर्नाभ्युपगम्यत इति भावः ।

ननु ग्रन्थकृता निरुक्तं विशेषलक्षणं नोक्तमिति तस्य भङ्गेऽपि न काचित्क्षतिरिति चेत् ? तदा रूपस्य स्वतोव्यावर्तकत्वस्य हानिः रूपहानिरित्यर्थो बोध्यः । तथाच जात्याश्रयस्य जातिपुरस्कारेणैव व्यावर्तकत्वनियमात् विशेषत्वजातेरङ्गीकारे विशेषत्वेनैव रूपेण विशेषाणां व्यावर्तकतया स्वतोव्यावर्तकत्वरूपस्य ग्रन्थकृदुक्तस्य विशेषलक्षणस्य भङ्गापत्तिरिति भावः ।

न चोक्तनियमे मानाभाव इति वाच्यम्, नियमानङ्गीकारे परमाणुगतैकत्वानां तत्तद्व्यक्तित्वेनैव परमाण्वन्तरभेदसाधकत्वसंभवे विशेषपदार्थस्यैवासिद्धिप्रसङ्गात् ।

प्रतियोगिताऽनुयोगितान्यतरसंबन्धेन समवायाभावः समवायाभाववृत्तिधर्मयोर्जातित्वे

सत्ताऽपेक्षया व्याप्यत्वाद् अल्पदेशवृत्तित्वाच्च द्रव्यत्वस्यापरत्वम्। तथाच धर्मद्वयसमावेशादुभयमविरुद्धम्।

मुक्तावलीमयूखः।

बाधकः। यः समवायेन कुत्रचित्तिष्ठति तत्र प्रतियोगितासंबन्धेन, यत्र तिष्ठति तत्रानुयोगितासंबन्धेन समवायो वर्तते। समवायोऽभावो वा न कुत्रचित्समवायेन तिष्ठति न वा समवायाभावयोः कश्चित्समवायेन तिष्ठतीति समवाये अभावे च प्रतियोगिताऽनुयोगितान्यतरसंबन्धेन समवायाभावो वर्तत इति समवायत्वमभावत्वं वा न जातिरिति भावः।

ननु यदि समवायत्वस्याभावत्वस्य च जातित्वाङ्गीकारः स्यात्तदा समवायेनैव तौ समवायाभावयोस्तिष्ठत इति अनुयोगितासंबन्धेन समवायस्य समवायाभावयोस्सत्त्वात्कथं जातिबाध इति चेत्? न, प्रतियोगितानुयोगितान्यतरसंबन्धेन जात्यतिरिक्तप्रतियोगिकत्वविशिष्टसमवायाभावः समवायाभाववृत्तिधर्मयोर्जातित्वे बाधक इति स्वीकारेणादोषात्। एवं च अनुयोगितासम्बन्धेन रूपे जात्यतिरिक्तप्रतियोगिकसमवायाभावसत्त्वेन व्यभिचारवारणाय प्रतियोगित्वनिवेशः। आत्मनि प्रतियोगितासंबन्धेन समवायासत्त्वेन व्यभिचारवारणायानुयोगितानिवेश इति बोध्यम्।

न च समवायस्यैकत्वेन तद्वृत्तिसमवायत्वस्य "व्यक्तेरभेदः" इत्यनेन जातित्वबाधात् तस्यासम्बन्ध एतदुदाहरणत्वं न संभवतीति वाच्यम्, समवायो नानेति नव्यमते "व्यक्तेरभेदः" इत्यनेन जातित्वबाधासंभवेन असंबन्धोदाहरणत्वस्य सौष्ठवात्।

ननु जातौ जात्यतिरिक्तप्रतियोगिकत्वविशिष्टसमवायस्य प्रतियोगितयाऽनुयोगितया चासत्त्वेनासंबन्ध इत्यनेनैव जातिबाधसंभवेऽनवस्थाया जातित्वबाधकत्वकथनं विफलमिति चेत्? न, जात्यतिरिक्तेत्यत्र जातिपदस्यासमवेतवृत्तिजातिपरतयाऽदोषात्।

दिनकर्यामनवस्थाऽसंबन्धरूपहानीनां जातिमत्त्वे बाधकत्वमुक्तं, तन्न युक्तम्, सकृदुच्चरितन्यायेन जातिबाधकपदस्य जातित्वजातिमत्त्वोभयबाधकपरत्वासम्भवात्। जातिबाधकसंग्रह इत्यत्र भावप्रधाननिर्देशतया जातिपदस्य जातित्वपरत्वमिति बोध्यम्॥८॥

सत्तापेक्षयेति। ननु सत्ताजातिः कथं सिध्यति। न च द्रव्यं सत्, गुणः सन्, कर्म सदित्यनुगतप्रतीत्यैव सत्ता जातिः सिध्यतीति वाच्यम्, तथा सति सामान्यं सत्, विशेषः सन्, समवायः सन्नित्यनुगतप्रतीत्या सामान्यादिसाधारणीभूतस्य कस्यचिद्धर्मस्य सिद्धावपि द्रव्यादित्रिकमात्रवृत्तेः सत्तायाः सिद्ध्यसंभवात्; इति चेत्?

अत्रोच्यते—यत्र प्रतियोगितासंबन्धेन ध्वंसोत्पत्तिस्तत्र तादात्म्यसंबन्धेन सत् इति कार्यकारणभावबलेन ध्वंसत्वावच्छिन्नकार्यतानिरूपिता सन्निष्ठा या कारणता सा किञ्चिद्धर्मावच्छिन्ना कारणतात्वादित्यनुमानेन सत्ताजातिसिद्धिरिति बोध्यम्। न च प्रागभावे व्यभिचारः, प्रागभावे सत्ताविरहादिति वाच्यम्, प्रागभाववृत्तिप्रतियोगिताभिन्नप्रतियोगितायाः कार्यतावच्छेदकसंबन्धत्वाङ्गीकारेणादोषात्।

समवायेन सत्तावच्छिन्नं प्रति तादात्म्येन द्रव्यत्वेन कारणतया जन्यतावच्छेदकतया सत्ताजातिसिद्धिरित्यपि केचित्।

विशेषं निरूपयति—

अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्तितः ॥ १० ॥

अन्त्य इति। अन्तेऽवसाने वर्तत इत्यन्त्यः, यदपेक्षया विशेषो नास्तीत्यर्थः। घटादीनां द्व्यणुकपर्यन्तानां तत्तदवयवभेदात्परस्परं भेदः, परमाणूनां परस्परभेदको विशेष एव, स तु स्वत एव व्यावृत्तः, तेन तत्र विशेषान्तरापेक्षा नास्तीति भावः ॥ ९ ॥ १० ॥

मुक्तावलीमयूखः।

ननु विशेषसद्भावे का युक्तिरिति चेत्? उच्यते—अयं घटः अस्माद्घटाद्भिन्नो भिन्नावयवारब्धत्वात्, अयं घटावयवः अस्माद्घटावयवाद् भिन्नो भिन्नावयवारब्धत्वादित्येवं द्व्यणुकपर्यन्तं भिन्नावयवारब्धत्वरूपहेतुना परस्परं भेदसाधनसंभवेऽपि परमाणूनां निरवयवत्वेन तेषां परस्परं भेदसाधनाय विशेषोऽभ्युपगम्यते। तथाच अयं परमाणुः अस्मात्परमाणोर्भिन्नो विशेषादित्यनुमानेन परमाणूनां परस्परं भेदः सिध्यति। अन्यथा परमाणूनां परस्परं भेदासिद्धौ द्व्यणुकादीनामपि तदसिद्ध्या घटादीनामपि भेदासिद्धिप्रसङ्गः। तदाह—घटादीनां द्व्यणुकपर्यन्तानामिति।

ननु विशेषस्य विशेषान्तराद् भेदसाधनाय विशेषान्तरमभ्युपेयमित्यनवस्था स्यादित्यत आह—स तु स्वत एव व्यावृत्त इति।

स्वतोव्यावृत्तत्वं च स्वभिन्नलिङ्गजन्यस्वविशेष्यकस्वसजातीयेतरभेदानुमित्यविषयत्वम्। स्वपदं पक्षत्वेनाभिमतपरम्। तथाच—घटः घटान्तरभिन्नः, भिन्नावयवारब्धत्वात् इत्यनुमितौ स्वं घटस्तद्भिन्नं लिङ्गं भिन्नावयवारब्धत्वरूपं तज्जन्या स्वं घटस्तद्विशेष्यिका या घटसजातीयं घटान्तरम् तत्प्रतियोगिको यो भेदस्तस्य अनुमितिः घटो घटान्तभिन्न इत्याकारिका तद्विषयत्वं घटे, अविषयत्वं विशेषे इति भवति समन्वयः। स्वभिन्नेत्यनुपादाने विशेषो विशेषान्तरभिन्नः, विशेषादित्यनुमितिविषयत्वस्य विशेषेऽपि सत्त्वादसंभवः स्यात्, स्वविशेष्यकेत्यनुपादाने घटो विशेषाद् भिद्यते कपालसमवेतत्वादित्यनुमितिविषयत्वस्य विशेषे सत्त्वेनोक्तदोषतादवस्थ्यम्।

ननु स्वलिङ्गकस्वविशेष्यकस्वसजातीयेतरभेदानुमितिविषयत्वमेव स्वतोव्यावृत्तत्वं वाच्यं, किं गुरुतरारम्भेणेति चेत्? न, घटो घटान्तराद्भिन्नस्तादात्म्येन घटादित्यनुमितिविषयत्वस्य घटेऽपि सत्त्वेनाव्याप्त्यापत्तेः। साजात्यं च पदार्थविभाजकोपाधिरूपेण। अन्यथा विशेषो द्रव्यभिन्नो गुणशून्यत्वादित्यनुमितिविषयत्वस्य विशेषे सत्त्वेनासम्भवः स्यादिति बोध्यम्।

ननु अन्त्यो नित्यद्रव्यवृत्तिरित्यनेन स्वतोव्यावृत्तत्वे सति नित्यवृत्तित्वं विशेषस्य लक्षणमवगम्यते तत्र नित्यवृत्तित्वदलनिवेशनं व्यर्थमिति चेत्? न, नित्यवृत्तिरित्यस्य विशेषाणां स्थानकथनोपयोगित्वेन लक्षणकुक्षावप्रवेशेनादोषात्।

नव्यास्तु नित्यद्रव्याणामेव स्वतो व्यावृत्तत्वमभ्युपगम्येष्टसिद्ध्या विशेषाङ्गीकारे मानाभाव इति वदन्ति।

विशेषत्वं च नित्यत्वे सति नित्यद्रव्यवृत्तित्वे सति नित्यद्रव्यद्वयावृत्तित्वे सति कर्मा-

समवायं दर्शयति—

घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः ।
तेषु जातेश्च सम्बन्धः समवायः प्रकीर्तितः ॥ ११ ॥

घटादीनामिति । अवयवावयविनोर्जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोर्नित्यद्रव्यविशेषयोश्च यः संबन्धः स समवायः । समवायत्वं नित्यसंबन्धत्वम् । तत्र प्रमाणं तु गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसंबन्धविषया विशिष्टबुद्धित्वाद् दण्डी पुरुष इति विशिष्टबुद्धिवद् इत्यनुमानम् । एतेन संयोगादिबाधात्समवायसिद्धिः ।

न च स्वरूपसंबन्धेन सिद्धसाधनम् अर्थान्तरं वा ? अनन्तस्वरूपाणां संबन्धत्वकल्पने गौरवाल्लाघवादेकसमवायसिद्धेः ।

---

मुक्तावलीमयूखः ।

वृत्तिजातिशून्यत्वम् । मनः क्रियायां, घटत्वे, आत्मत्वे, गगनपरिमाणे, च अतिव्याप्तिवारणाय क्रमेण दलानि, इत्यन्ये ॥ ९ ॥ १० ॥

घटादीनां कपालादाविति । षष्ठ्यर्थः प्रतियोगित्वं, सप्तम्यर्थोऽनुयोगित्वं, तथाच घटप्रतियोगिकः कपालानुयोगिकः यः सम्बन्धः स समवाय इत्यर्थः ।

समवायत्वं नित्यसम्बन्धत्वमिति । नित्यत्वे सति सम्बन्धत्वं समवायत्वमित्यर्थः । संयोगेऽतिव्याप्तिवारणाय सत्यन्तम् । परमाण्वादावतिव्याप्तिवारणाय विशेष्यम् । ननु द्रव्यत्वाभावादीनां सम्बन्धः न प्रतियोग्यनुयोग्युभयरूपो, गौरवात्, किन्तु लाघवेन द्रव्यत्वाभावस्वरूप एव, स च नित्य इति द्रव्यत्वाभावरूपस्वरूपसंबन्धेऽतिव्याप्तिरिति चेत् ? न, सम्बन्धप्रतियोग्यनुयोगिभिन्नत्वे सतीत्यस्यापि निवेशेनादोषात् ।

न च नित्यसंयोगाङ्गीकर्तृमते नित्यसंयोगेऽतिव्याप्तिरिति वाच्यम् , नित्यत्वे सतीत्यनेन नित्यमात्रवृत्तिधर्माश्रयत्वे सतीत्यस्य विवक्षणेनादोषादित्यलम् ॥

ननु विशेषणतासन्निकर्षेण समवायस्य प्रत्यक्षतया तत्र नानुमानापेक्षेति गुणक्रियादीत्यादिनाऽनुमानोपन्यासो व्यर्थ इति चेत् ? न, कालघटसंयोगप्रत्यक्षवारणाय संयोगप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य कारणतेति वादिनो नैयायिकस्य मते समवायस्य प्रत्यक्षत्वेऽपि सम्बन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य कारणतेति वादिनो वैशेषिकस्य मते समवायस्यैकतया एकदा तदाश्रयीभूतसकलव्यक्तीनां प्रत्यक्षासम्भवेन समवायस्याप्यप्रत्यक्षतया तन्मतानुरोधेनानुमानोपन्यासस्सार्थक्यादिति बोध्यम् ।

संयोगादिबाधादिति । पृथक्सिद्धद्रव्ययोरेव संयोगः इति नियमादिति भावः । सिद्धसाधनमिति । वेदान्तिनो हि घटकपालादीनां स्वरूपसम्बन्धमभ्युपगच्छन्ति तेषां सिद्धसाधनम् । नैयायिका घटकपालादीनां समवायमभ्युपगच्छन्ति इति समवायसाधने प्रवृत्तानां तेषां स्वरूपसम्बन्धसिद्ध्याऽर्थान्तरमिति भावः ।

अनन्तस्वरूपाणामिति । ननु समवायनानात्ववादिनां नव्यानां मते अनन्तसमवायानां तेषां सम्बन्धत्वस्य च कल्पने गौरवादुक्तानुमानेन क्लृप्तानन्तस्वरूपाणां सम्बन्ध-

न च समवायस्यैकत्वे वायौ रूपवत्ताबुद्धिप्रसङ्गः,

तत्ररूपसमवायसत्त्वेऽपि रूपाभावात् ।

न चैवमभावस्य वैशिष्ट्यं संबन्धान्तरं सिध्येदिति वाच्यम्,

तस्य नित्यत्वे भूतले घटानयनानन्तरमपि घटाभावबुद्धिप्रसङ्गाद्, घटाभावस्य तत्र सत्त्वात्, तस्य च नित्यत्वात् । अन्यथा देशान्तरेऽपि तत्प्रतीतिर्न स्याद् वैशिष्ट्यस्य च तत्र सत्त्वात् । मम तु घटे पाकरक्ततादशायां

---

मुक्तावलीमयूखः ।

स्वाङ्गीकरणमेवोचितमिति चेत् ? न, समवायसम्बन्धेन पटत्वावच्छिन्नं प्रति तादात्म्येन तन्तुत्वेन हेतुताया कार्यतावच्छेदकसम्बन्धविधया समवायसिद्धेः ।

न च समवायस्थाने स्वरूपं निवेश्यतामिति न तेनापि समवायसिद्धिरिति वाच्यम्, यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणमिति समवायिकारणत्वव्यवस्थाभङ्गापत्तेः ।

न च तत्रापि यत्संबद्धं कार्यमुत्पद्यते तत्समवायिकारणमित्येव लक्षणं क्रियतामिति वाच्यम्, कपालसम्बद्धघटध्वंसं प्रति कपालस्य समवायिकारणत्वापत्तेः ततश्च कपालनाशे घटध्वंसस्यापि ध्वंसापत्तेरिति दिक् ।

ननु समवायस्यैकत्वे वायौ स्पर्शसमवायस्य सत्त्वेन स्पर्शसमवायरूपसमवाययोरैक्येन 'सम्बन्धसत्ता सम्बन्धिसत्तायां नियामिका भवति' इति नियमाद् रूपवान् वायुरिति प्रतीतिः स्यादिति चेत् ? न, रूपप्रतियोगिकत्वविशिष्टसमवायस्यैव रूपसम्बन्धतया रूपप्रतियोगिकत्वविशिष्टसमवायस्य वायावभावेन रूपवान् वायुरिति प्रतीत्यभावात् ।

न च 'विशिष्टं शुद्धान्नातिरिच्यते' इति न्यायाद् वायौ समवायस्य सत्त्वेन विशिष्टसमवायोऽप्यस्तीति तद्दोपतादवस्थ्यमिति वाच्यम्, सत्ताया विशिष्टसत्तायाश्चैक्येऽपि सत्तात्वावच्छिन्ननिरूपकतानिरूपिताधिकरणताया विशिष्टसत्तात्वावच्छिन्ननिरूपकतानिरूपिताधिकरणतायाश्च भिन्नत्ववत् समवायविशिष्टसमवाययोरैक्येऽपि समवायत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणताया रूपप्रतियोगिकत्वविशिष्टसमवायत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणतायाश्च भिन्नत्वाङ्गीकारेण रूपप्रतियोगिकत्वविशिष्टसमवायत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणताया एव रूपसम्बन्धत्वाङ्गीकारेण वायौ तस्या अभावाद् वायू रूपवानिति प्रतीत्यभावात् ।

नव्यास्तु पृथिव्यां गन्धस्य समवायो न जले इति प्रतीत्या समवायो नानेति वदन्ति ।

ननु रूपविशिष्टो घट इति प्रतीत्या यथा संबन्धविधया समवायः सिध्यति, तथा घटाभावविशिष्टं भूतलमिति प्रतीत्याऽभावस्यापि वैशिष्ट्यनामकं संबन्धान्तरं सिध्येदिति चेत् ? न, वैशिष्ट्यस्यानित्यत्वेऽनन्तवैशिष्ट्यानां तेषां संबन्धत्वस्य च कल्पनाऽपेक्षया क्लृप्तानन्तस्वरूपाणां संबन्धत्वकल्पनेन लाघवादुक्तप्रतीत्या वैशिष्ट्यसिद्ध्यसंभवात् । मम रूपविशिष्टो घट इतिप्रतीत्या सिध्यन् समवायो नित्य एकश्चेति । अनन्तस्वरूपेषु संबन्धत्वकल्पनापेक्षया अतिरिक्त एकस्मिन्नेव संबन्धत्वकल्पनेन लाघवात्समवायः सिध्यति ।

ननु मयाऽपि वैशिष्ट्यनित्यत्वमङ्गीक्रियत इति न गौरवमिति चेत् ? न, घटाभाव-

श्यामरूपस्य नष्टत्वान्न तद्वत्ताबुद्धिः । वैशिष्ट्यस्यानित्यत्वे त्वनन्तवैशिष्ट्यकल्पने तवैव गौरवम् । इत्थं च तत्तत्कालीनतत्तद्भूतलादिकं तत्तदभावानां संबन्धः ॥ ११ ॥

अभावं विभजते—

अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः ।
प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च ॥ १२ ॥
एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते ।

अभावस्त्विति । अभावत्वं द्रव्यादिषट्कान्योन्याभाववत्त्वम् । संसर्गेति । संसर्गाभावान्योन्याभावभेदादित्यर्थः । अन्योन्याभावस्यैकविधत्वात्तद्विभागाभावात्संसर्गाभावं विभजते—प्रागभाव इति संसर्गाभावत्वम् अन्योन्या-

प्रतियोगिज्ञानाधीनज्ञानविषयत्वं । अभावत्वम्

मुक्तावलीमयूखः ।

ति भूतले घटानयनान्तरमपि घटाभाववैशिष्ट्ययोरुभयोरपि नित्यतया संबन्धसंबन्धिनोः सत्त्वेन घटाभाववद् भूतलमिति बुद्धेः प्रमात्वप्रसङ्गात् ।

न च तवापि घटे रक्तरूपोत्पादेऽपि श्यामो घटः इति प्रतीतिः कस्मान्न भवति श्यामरूपसमवायस्य नित्यतया तत्र सत्त्वादिति वाच्यम्, श्यामरूपस्य नष्टतया तत्र श्यामो घट इति प्रतीत्यभावात् । न च मयाऽपि वैशिष्ट्यस्य नित्यत्वाङ्गीकारेऽपि घटात्यन्ताभावस्यानित्यताङ्गीकारेण घटाभाववति भूतले घटानयनानन्तरं घटाभावस्य नष्टत्वान्न घटाभाववत्ताबुद्धेः प्रमात्वप्रसङ्ग इति वाच्यम्, घटाभावस्यानित्यत्वे अवच्छेदकभेदात्प्रतियोगिता भिद्यते, प्रतियोगिताभेदाच्चाभावो भिद्यत इति नियमेन एतद्देशीयघटाभावनाशे घटशून्यदेशीयघटाभावस्यापि नष्टत्वात्तत्रापि घटाभाववत्त्वबुद्धेरप्रमात्वापातात् ।

न च—स्वरूपसंबन्धवादिनस्तवापि स्वौ प्रतियोग्यनुयोगिनौ रूपं यस्य तत् स्वरूपमिति व्युत्पत्त्या प्रतियोग्यनुयोगिरूप एव संबन्धः फलति, यथाच घटाभाववति भूतले घटानयनानन्तरमपि नित्यतया घटाभावरूपप्रतियोगिनः भूतलरूपानुयोगिनश्च सत्त्वेन तदुभयात्मकस्वरूपसंबन्धस्यापि सत्त्वात् घटाभाववद्भूतलमिति प्रतीतिः स्यादेव;—इति वाच्यम्, घटाभाववद्भूतलमिति प्रमात्मकज्ञानकालीनतत्तद्भूतलादेरेव तत्तदभावसंबन्धताङ्गीकारेण तत्कालीनतद्भूतलरूपस्वरूपसंबन्धाभावेनादोषादित्यलम् ॥ ११ ॥

नन्वभावत्वं द्रव्यादिषट्कान्योन्याभाववत्त्वमिदं लक्षणं द्रव्यादावतिव्याप्तं, घटः घटपटोभयं नेति भेदस्य घटे सत्त्ववद् द्रव्यं द्रव्यादिषट्कं नेति प्रतीतिसाक्षिकषट्त्वावच्छिन्नप्रतियोगिताकभेदस्य द्रव्येऽपि सत्त्वादिति चेत् ? न, संख्यारूपषट्त्वस्य पर्याप्तिसंबन्धेन द्रव्यादिषु प्रत्येकमसत्त्वेनोक्तापत्तिसंभवेऽपि अपेक्षाबुद्धिरूपषट्त्वस्य प्रकृते विषयतयाऽवच्छेदकत्वाङ्गीकारेण द्रव्यादिषु प्रत्येकं तस्य विषयतया सत्त्वेन द्रव्यं द्रव्यादिषट्कं नेति भेदस्य वक्तुमशक्यत्वेनोक्तापत्त्यभावात् । यदि तु 'द्रव्यं न' 'गुणो न' इत्यादीनां द्रव्यत्वाद्यवच्छिन्नप्रतियोगिताकभेदानां षण्णां ग्रहणं लक्षणेऽभिमतं तदा न कोऽपि दोषः, परं त्वननुगमापत्तिरिति बोध्यम् ।

भावभिन्नाभावत्वम् । अन्योन्याभावत्वं तदात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वम् । विनाश्यभावत्वं प्रागभावत्वम् । जन्याभावत्वं ध्वंसत्वम् । नित्यसंसर्गाभावत्वम् अत्यन्ताभावत्वम् ।

यत्र तु भूतलादौ घटादिकमपसारितं पुनरानीतं च तत्र घटकालस्य संबन्धाघटकतयाऽत्यन्ताभावस्य नित्यत्वेऽपि घटकाले न घटात्यन्ताभावबुद्धिः । तत्रोत्पादविनाशशाली चतुर्थोऽयमभाव इति केचित् । अत्र ध्वंसप्रागभावयोरधिकरणे नात्यन्ताभाव इति प्राचीनमतम् । श्यामघटे रक्तो

मुक्तावलीमयूखः ।

नन्वभावत्वं द्रव्यादिषट्कान्योन्याभाववत्त्वम्, अन्योन्याभावत्वं च तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वम्, इत्यभावत्वज्ञानेऽन्योन्याभावत्वज्ञानस्य अन्योन्याभावत्वज्ञानेऽभावज्ञानस्य चापेक्षणात् स्वज्ञप्त्यधीनज्ञप्तिकत्वरूपान्योन्याश्रयापत्तिः ।

न च विशेषणतासंनिकर्षजन्यप्रत्यक्षविषयत्वमभावत्वमिति स्वीकारेण नान्योन्याश्रय इति वाच्यम्, नैयायिकमते समवायस्यापि विशेषणतासंनिकर्षजन्यप्रत्यक्षविषयतया तत्रातिव्याप्तिवारणाय समवायभिन्नत्वे सतीत्यस्य निरुक्ताभावत्वलक्षणे निवेशनीयतयाऽस्यापि लक्षणस्यान्योन्याभावत्वघटिततयोक्तदोषतादवस्थ्यात् । एतेन भावभिन्नत्वमभावत्वमित्यपि परास्तम् । अभावत्वस्य भावभिन्नत्वरूपत्वाङ्गीकारे उद्देश्यतावच्छेदकविधेययोरैक्येन अभावो न भाव इति वाक्याच्छाब्दबोधानुपपत्तेश्च ।

न चासमस्तनञ्पदजन्यप्रतीतिविषयत्वमभावत्वमिति स्वीकरणीयम्, 'अनुदरा कन्या' इत्यादौ नञ्पदजन्यप्रतीतिविषयेऽल्पत्वादावतिव्याप्तिवारणायासमस्तेति, ततश्च नोक्तदोष इति वाच्यम्, श्यामघटे रक्तो नास्ति रक्तघटे श्यामो नास्तीति धीर्धी प्रागभावं ध्वंसं चावगाहत इति वादिनो मते प्रागभावध्वंसयोर्लक्षणसमन्वयेऽपि उक्तप्रतीतिरत्यन्ताभावमगाहते, न ध्वंसं न वा प्रागभावमिति वादिनः 'ध्वस्त' इति 'भविष्यति' इतिप्रतीतिविषयत्वमेव तयोरित्यभ्युपगच्छतो मते ध्वंसप्रागभावयोरव्याप्तितादवस्थ्यात्, नास्त्युदरं यस्या इति विग्रहे असमस्तनञ्पदजन्यप्रतीतिविषयत्वस्यात्पत्वे सत्त्वेनातिव्याप्तेश्च;—इति चेत् ? न, अभावत्वस्याखण्डोपाधित्वस्वीकारेणान्योन्याश्रयाभावादित्यलम् ।

नन्वन्योन्याभावत्वं तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वं, तादात्म्यं च स्वप्रतियोगिवृत्तित्व—स्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टान्यत्वं, ततश्च तादात्म्यलक्षणे भेदस्य भेदलक्षणे तादात्म्यस्य च प्रविष्टतयाऽन्योन्याश्रयप्रसङ्ग इति चेत्? न, भेदत्वस्याखण्डोपाधिताङ्गीकारेणादोषात् ।

ननु प्रागभावसत्त्वे किं मानमिति चेत् ? उच्यते, उत्पन्नेऽपि घटे तदीयकारणानां कपालसंयोगदण्डादीनां सद्भावेन पुनरुत्पादभिया तत्स्वीकारात् । ततश्च घटोत्पत्तिं प्रति प्रागभावस्यापि हेतुतया तस्यैव तदानीमभावेन न पुनर्घटोत्पाद इति 'अयं घटः स्वोत्पत्तिक्षणावृत्तिकारणजन्यः स्वोत्पत्तिद्वितीयक्षणानुत्पन्नत्वात्' इत्यनुमानेन प्रागभावसिद्धिः, तस्य कार्यसामग्रीनाश्यत्वेन उत्पत्तिक्षणावृत्तित्वादिति केचित् ।

वस्तुतस्तु जन्यद्रव्यं प्रति समवायसंबन्धावच्छिन्नप्रतियोगिताकद्रव्याभावस्य कार-

नास्तीति रक्तघटे श्यामो नास्तीति धीश्च प्रागभावं ध्वंसं चावगाहते न तु तदत्यन्ताभावं तयोर्विरोधात् ।

नव्यास्तु तत्र विरोधे मानाभावाद् ध्वंसादिकालावच्छेदेनाप्यत्यन्ताभावो वर्तत इति प्राहुः ।

नन्वस्तु अभावानामधिकरणात्मकत्वं लाघवादिति चेद् ?

न, अनन्ताधिकरणात्मकत्वकल्पनाऽपेक्षयाऽतिरिक्तकल्पनाया एव लघीयस्त्वात् । एवं च आधाराधेयभावोऽप्युपपद्यते । एवं च तत्तच्छब्दगन्धरसाद्यभावानां प्रत्यक्षत्वमुपपद्यते । अन्यथा तत्तदधिकरणानां तत्तदिन्द्रियाग्राह्यत्वादप्रत्यक्षत्वं स्यात् । एतेन ज्ञानविशेषकालविशेषाद्यात्मकत्वमभावस्येति प्रत्युक्तमप्रत्यक्षत्वापत्तेः ॥ १२ ॥

---

मुक्तावलीमयूखः ।

णताऽभ्युपगमेनोक्तदोषवारणसंभवे प्रागभावस्य घटं प्रति हेतुताङ्गीकारे मानाभाव इति । 'घटो ध्वस्तः' इति प्रत्यक्षबलेन ध्वंसस्य सिद्धावपि प्रागभावस्य सिद्धौ मानाभावः, घटो भविष्यतीत्यत्र भविष्यत्त्वं वर्तमानकृतिध्वंसाधिकरणकालोत्पत्तिकत्वरूपमिति न भविष्यतीतिप्रतीत्याऽपि प्रागभावसिद्धिप्रत्याशेत्यन्यत्र विस्तरः ।

तयोर्विरोधादिति । अत्यन्ताभावस्य प्रतियोगिना सह विरोधित्ववत् स्वप्रतियोगिध्वंसप्रागभावाभ्यामपि विरोधित्वमित्यभिसन्धानः ।

मानाभावादित । अत एवान्तरा (१)श्यामे रक्तं रूपं नास्तीति प्रत्ययः । न तु रक्तिमध्वंसप्रागभावाद्यवगाही पूर्वापररक्तिमध्वंसप्रागभाववति संप्रति रक्तेऽपि तथा प्रत्ययप्रसङ्गात् । मम तु रक्तं रूपं नास्तीति प्रत्ययोऽत्यन्ताभावमवगाहते, न तु ध्वंसं न वा प्रागभावं, तयोः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वविरहात् ॥

नन्वभावस्याधिकरणात्मकत्वमेवास्तु किमतिरिक्तपदार्थत्वकल्पनया ?

न चानन्ताधिकरणेषु अभावत्वकल्पनाऽपेक्षया अतिरिक्तत्वकल्पनायामेव लाघवम्, अन्यथाऽभेदे आधाराधेयभावानुपपत्त्या घटाभाववद्भूतलमिति प्रतीतिर्न स्यादिति वाच्यम्, अतिरिक्तानन्ताभावेष्वभावत्वकल्पनाऽपेक्षया क्लृप्तानन्ताधिकरणेष्वभावत्वकल्पने एव लाघवात् अभवाधिकरणकाभावस्याधिकरणस्वरूपत्वेऽप्याधाराधेयभावोपपत्तिवद्घटाभाववद्भूतलमित्यस्योपपत्तेश्च ।

न चाभावस्याधिकारणात्मकत्वे वायोर्घ्राणेन्द्रियाग्राह्यतया तद्रूपगन्धाभावस्यापि घ्राणेन्द्रियाग्राह्यत्वं त्वगिन्द्रियग्राह्यत्वं च स्यातां, ततश्च "येनेन्द्रियेण या व्यक्तिर्गृह्यते तद्गता जातिस्तदभावश्च तेनैवेन्द्रियेण गृह्यते" इति नियमभङ्गः स्याद्गन्धस्य घ्राणेन्द्रियग्राह्यत्वेऽपि गन्धाभावस्य त्वगिन्द्रियग्राह्यत्वादिति वाच्यम्, पृथिवीनिष्ठयोर्गन्धपृथिवीत्वयोरेकस्य घ्राणग्राह्यत्वमपरस्य चक्षुर्ग्राह्यत्वमिव वायुनिष्ठयोर्गन्धाभावत्ववायुत्वयोरेकस्य घ्राणग्राह्यत्वमपरस्य त्वग्ग्राह्यत्वमिति स्वीकारेण क्षत्यभावात् । न चायमस्ति नियमः "एकधर्मिनिष्ठानां यावतां धर्माणामेकस्य धर्मस्य येनेन्द्रियेण ग्रहणं तेनैव सर्वेषाम्" इति ।

---

(१) पूर्वं रक्तस्ततः श्यामः ततो रक्तस्तत श्यामः ततो रक्तो यो घटस्तस्मिन्नित्यर्थः ।

इदानीं पदार्थानां साधर्म्यं वैधर्म्यं च वक्तुं प्रक्रमते—

**सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते ॥ १३ ॥**

सप्तानामिति । समानो धर्मो येषां ते सधर्माणः तेषां भावः साधर्म्यं, समानो धर्म इति फलितार्थः । एवं विरुद्धो धर्मो येषां ते विधर्माणः तेषां भावो वैधर्म्यं, विरुद्धो धर्म इति फलितार्थः । ज्ञेयत्वं ज्ञानविषयता सा च सर्वत्रैवास्ति, ईश्वरादिज्ञानविषयतायाः केवलान्वयित्वात् । एवमभिधेयत्व-प्रमेयत्वादिकं बोध्यम् ॥ १३ ॥

**द्रव्यादयः पञ्च भावा अनेके समवायिनः ।**

**सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः ॥ १४ ॥**

द्रव्यादय इति । द्रव्यगुणकर्मसामान्यविशेषाणां साधर्म्यमनेकत्वं समवायित्वं च । यद्यप्यनेकत्वमभावेऽप्यस्ति तथाप्यनेकत्वे सति भावत्वं पञ्चानां साधर्म्यम् । तथा चानेकभाववृत्तिपदार्थविभाजकोपाधिमत्त्वमिति

---

मुक्तावलीमयूखः ।

न च धर्मिणोऽप्रत्यक्षत्वे धर्मस्याप्यप्रत्यक्षतयाऽऽकाशनिष्ठगन्धाभावत्वादेः प्रत्यक्षत्वं न स्यादिति वाच्यम्, अकाशस्याप्रत्यक्षाभावेऽपि तद्धर्मस्य शब्दस्य प्रत्यक्षत्ववद्गन्धाभावत्वादेरपि प्रत्यक्षत्वसंभवादिति चेत् ?

न, तथा सति पृथिवी गन्धवत्तया घ्राणग्राह्या न चक्षुर्ग्राह्येतिवद् वायुर्गन्धाभावत्वेन घ्राणग्राह्य इति प्रतीतिप्रसङ्गादित्यलम् ॥ १२ ॥

केवलान्वयित्वादिति । वृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम् ॥ १३ ॥

षण्णां साधर्म्यं तु भावत्वं स्फुटतया नोक्तम् ।

ननु किमिदं भावत्वमिति चेत् ? उच्यते, समवायैकार्थसमवायान्यतरसंबन्धेन सत्तावत्त्वं भावत्वमिति । सत्ता हि द्रव्यगुणकर्मसु समवायेन तिष्ठति, सामान्यविशेषसमवायेषु एकार्थसमवायेन तिष्ठति । एकार्थसमवायो नाम एकस्मिन्नर्थे उभयोः समवायः । यथा घटे घटत्वं समवायेन तिष्ठति तथा सत्ताऽपीपि एकार्थसमवायसम्बन्धेन सत्तावत्त्वं घटत्वसामान्यस्य, एवं विशेषः परमाणौ समवायेन तत्रैव सत्ताऽपीति एकार्थसमवायसम्बन्धेन सत्तावत्त्वं विशेषस्य, एवं कपाले समवायेन समवायस्तत्रैव सत्ताऽपीति एकार्थसमवायेन सत्तावत्त्वं समवायस्येति भवति समन्वयः ।

न च कपाले स्वरूपेण समवायस्तिष्ठतीति कथमेकार्थसमवायेन सत्तावत्त्वं समवायस्येति वाच्यम्, समवायस्य स्वरूपाख्यः सम्बन्धो लाघवेन समवायरूप एवाङ्गीक्रियते न प्रतियोग्यनुयोग्युभयरूप इति कपाले स्वरूपेण समवायस्तिष्ठतीत्यस्य समवायेन तिष्ठतीत्यर्थ एव पर्यवसानेनादोषात् ।

अनेकभाववृत्तीति । अनेकेत्यनुक्तौ भाववृत्तिसमवायत्वरूपपदार्थविभाजकोपाधिमादाय समवायेऽतिव्याप्तिः । भावेत्यनुक्तावभावेऽतिव्याप्तिः । पदार्थविभजकेत्यनुक्तौ भावत्वमादाय समवायेऽतिव्याप्तिः । उपाधीत्यनुक्त्वा जातीत्युपादाने सामान्यादावव्याप्तिः ।

फलितोऽर्थः। तेन प्रत्येकं घटादावाकाशादौ च नाव्याप्तिः। समवायित्वं च समवायसंबन्धेन संबन्धित्वं न तु समवायवत्त्वं सामान्यादावभावात्। तथाच समवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वमिति फलितोऽर्थः। तेन नित्यद्रव्येषु नाव्याप्तिः।

सत्तावन्त इति। द्रव्यगुणकर्मणां सत्तावत्त्वमित्यर्थः।

गुणादिरिति। यद्यपि गुणक्रियाशून्यत्वमाद्यक्षणे घटादावतिव्याप्तं क्रियाशून्यत्वं च गगनादावतिव्याप्तं तथापि गुणवदवृत्तिधर्मवत्त्वं कर्मवदवृत्तिपदार्थविभाजकोपाधिमत्त्वं तदर्थः। नहि घटत्वादिकं द्रव्यत्वं वा गुणवदवृत्ति कर्मवदवृत्ति वा, किं तु गुणत्वादिकं तथा, आकाशत्वादिकं तु

---

मुक्तावलीमयूखः।

उपाधिमत्ता च समवायस्वरूपान्यतरसंबन्धेनेति।

नन्वनेकभाववृत्तीत्यत्र अनेकत्वं यदि बहुत्वसंख्या, तदा गुणादौ संख्याविरहात्तेष्वव्याप्तिः। यदि यत्किञ्चिदेकभिन्नत्वं, तदा समवायेऽतिव्याप्तिः। यदि च एकत्वावच्छिन्नसामान्यभेदः, तत्र चैकत्वं यदि संख्यारूपं, तदोक्तातिव्याप्तितादवस्थ्यम्। यदि च तन्मात्रविषयकबुद्धिविषयत्वं, तदाऽप्रसिद्धिः तादृशैकत्वस्य केवलान्वयित्वादिति चेत्? उच्यते, स्वप्रतियोगिवृत्तित्व–स्वसामानाधिकरण्योभयसंबन्धेन भेदविशिष्टत्वे सति भाववृत्तित्वमनेकभाववृत्तित्वमित्यङ्गीकारेणादोष इति।

समवायित्वं चेति। ननु समवायोऽस्त्यस्मिन्निति व्युत्पत्त्या समवायित्वमित्यस्य समवायानुयोगित्वमित्यर्थः, तच्च सामान्यादौ नास्तीत्यव्याप्तिरित्यत आह—

समवायसम्बन्धेन सम्बन्धित्वमिति। समवायित्वमित्यनेन समवायानुयोगित्वं समवायप्रतियोगित्वं चोभयं विवक्षितमिति भावः।

ननु समवायसम्बन्धेनेत्यत्र "प्रकृत्यादिभ्यश्च" इति तृतीयाया अभेदोऽर्थस्ततश्च समवायसम्बन्धाभिन्नसम्बन्धवत्त्वमित्यर्थः। तत्र षष्ठ्यर्थे इनिप्रत्ययेन समवायप्रतियोगित्वमित्यर्थे नित्यद्रव्येष्वव्याप्तिः। सप्तम्यर्थ इनिना समवायानुयोगित्वमित्यर्थे सामान्यादावव्याप्तितादवस्थ्यमत आह—

समवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वमिति। समवायश्च न समवेतस्तस्य स्वरूपेण वृत्तेरित्यलम्।

समवेतसमवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वं द्रव्यादीनां चतुर्णां साधर्म्यम्।

सत्तावत्त्वमिति। सत्तावत्त्वं समवायेन विवक्षितम्। तेन एकार्थसमवायेन सत्तायाः सामान्यादिवृत्तित्वेऽपि न क्षतिरिति बोध्यम्।

द्रव्यगुणयोर्नित्यानित्यवृत्तिपदार्थविभाजकजातिमत्त्वं साधर्म्यम्।

आद्यक्षणे घटादावतिव्याप्तमिति। उत्पन्नं द्रव्यं क्षणमगुणं निष्क्रियं च तिष्ठतीति नियमात् आद्यक्षणे घटे निर्गुणत्वमतिव्याप्तमिति भावः।

न चोक्तनियमे मानाभावः, गुणं प्रति द्रव्यस्य कारणतया गुणोत्पत्तेः प्राक् कारणी-

न पदार्थविभाजकोपाधिः ॥ १४ ॥

सामान्यपरिहीनास्तु सर्वे जात्यादयो मता ।
पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम् ॥ १५ ॥

सामान्येति । सामान्यानधिकरणत्वं सामान्यादीनामित्यर्थः । पारिमाण्डल्येति । पारिमाण्डल्यमणुपरिमाणं, कारणत्वं तद्भिन्नानां साधर्म्यमित्यर्थः । अणुपरिमाणं तु न कस्यापि कारणम् । तद्धि स्वाश्रयारब्धद्रव्यपरिमाणारम्भकं भवेत् । तच्च न संभवति, परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमान्महदारब्धस्य महत्तरत्ववदणुजन्य-

मुक्तावलीमयूखः ।

भूतद्रव्यसत्ताया आवश्यकत्वस्यैव मानत्वात् । द्रव्यगुणयोः सहोत्पत्तौ तु सव्येतरविषाणयोरिव कार्यकारणभावानुपपत्तिः स्यादिति ध्येयम् ॥ १४ ॥

सामान्यपरिहीनास्तु इति । "कृत्यचः" इति णत्वेन सामान्यपरिहीणा इत्येव पाठो युक्त इति ध्येयम् ।

केचित्तु परीत्यस्य 'अधिपरी अनर्थकौ' इत्यनेन कर्मप्रवचनीयतया उपसर्गत्वाभावेन न णत्वप्राप्तिरिति वदन्ति ।

नन्वेकार्थसमवायेन सामान्यवत्त्वं सामान्यादीनामप्यस्तीति जात्यादयः सामान्यपरिहीणा इति कथनमयुक्तमतो व्याचष्टे—

सामान्यानधिकरणत्वमिति । तथाच वृत्तितानियामकसम्बन्धेन सामान्यवत्त्वं न जात्यादेरिति भावः ।

पारिमाण्डल्येति । पारिमाण्डल्यम् अणुपरिमाणम् । तच्च परमाणुपरिमाणं द्व्यणुकपरिमाणं च । अणुपरिमाणभिन्नानां कारणत्वं साधर्म्यम् । अणुपरिमाणं तु न कस्यापि कारणमिति । अणुपरिमाणं हि स्वाश्रयारब्धद्रव्यपरिमाणारम्भकं भवेत् । स्वमणुपरिमाणं, तदाश्रयीभूतं द्रव्यं परमाणुर्द्व्यणुकं च, तदारब्धं द्रव्यं द्व्यणुकं त्रसरेणुश्च, तत्परिमाणं द्व्यणुकपरिमाणं त्रसरेणुपरिमाणं च, तस्यैवारम्भकं भवेत् । ततश्च परिमाणस्य स्वसजातीयोत्कृष्टपरिमाणजनकत्वनियमेन महदारब्धस्य महत्तरत्ववदणुजन्यस्याणुतरत्वप्रसङ्गात् ।

ननु द्व्यणुकपरिमाणस्य किमसमवायिकारणमिति चेत् ? तर्हि परमाणुगता द्वित्वसंख्यैवेत्यवेहि । एवं त्रसरेणुपरिमाणस्य द्व्यणुकगतत्रित्वसंख्यैवासमवायिकारणमिति बोध्यम् ।

नन्वेवं कपालगतद्वित्वसंख्यैव घटादिपरिमाणस्यापि कारणमस्तु इति चेद् ? न, द्वित्वसंख्यायामणुपरिमाणारम्भकत्वस्य द्व्यणुके दृष्टतया प्रकृतेऽपि घटपरिमाणस्याणुत्वापत्त्या घटस्याप्रत्यक्षत्वापत्तेः, द्रव्यप्रत्यक्षे महत्त्वस्य कारणत्वात् ।

कारिकायां पारिमाण्डल्यपदं परममहत्परिमाणस्यातीन्द्रियसामान्यस्य विशेषाणां चोपलक्षणम् । तथाच तेषामपि न कुत्रापि कारणत्वमिति बोध्यम् ॥

ननु प्रत्यक्षं प्रति तादात्म्येन विषयस्य कारणत्वात् पारिमाण्डल्यादेरपि योगिप्रत्यक्षे कारणतया पारिमाण्डल्यभिन्नानामित्ययुक्तमिति चेत् ? न, योगजधर्मेणातीतानागतविषयस्यापि प्रत्यक्षत्वाद् योगिप्रत्यक्षे विषयस्य कारणत्वानभ्युपगमात् । तदाह—इदमपीति ।

स्याणुतरत्वप्रसङ्गात् । एवं परममहत्परिमाणमतीन्द्रियसामान्यं विशेषाश्च वोध्याः । इदमपि योगिप्रत्यक्षे विषयस्य न कारणत्वम् । ज्ञायमानं सामान्यं न प्रत्यासत्तिः । ज्ञायमानं लिङ्गं नानुमितिकरणमित्यभिप्रायेणोक्तम् । मानसप्रत्यक्षे आत्ममहत्त्वस्य कारणत्वान्महत्परिमाणं कालादेर्बोध्यम् ।

तस्यापि न कारणत्वमित्याचार्याणामाशय इत्यन्ये । तन्न, ज्ञानातिरिक्तं प्रत्येवाकारणताया आचार्यैरुक्तत्वात् ॥ १९ ॥

ननु कारणत्वं किम् ? अत आह—

अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता ।
कारणत्वं भवेत्तस्य त्रैविध्यं परिकीर्तितम् ॥ १६ ॥

---

मुक्तावलीमयूखः ।

ननु ज्ञायमानसामान्यस्य प्रत्यासत्तितया पारिमाण्डल्यादेः सामान्यलक्षणाजन्यज्ञाने कारणत्वात्पुनरपि पारिमाण्डल्यभिन्नानामित्ययुक्तमिति चेद् ? न, ज्ञायमानसामान्यस्य प्रत्यासत्तित्वे यत्र तद्घटनाशानन्तरं तद्घटवतः स्मरणं जातं तत्र सामान्यलक्षणप्रत्यासत्त्या सर्वेषां तद्घटवतां भानानापत्तिरतः सामान्यज्ञानस्य सामान्यलक्षणप्रत्यासत्तितयाऽदोषात् । तदाह—ज्ञायमानमिति ।

ननु अनुमितिं प्रति ज्ञायमानलिङ्गस्य कारणतया परमाणौ परमाण्वन्तरभेदसाधने विशेषस्य हेतुतया विशेषो न कस्यापि कारणमित्ययुक्तमिति चेत् ? न, इयं शाला अतीतवन्हिमती, अतीतधूमादित्यनुमितेर्दर्शनेनानुमितिं प्रति ज्ञायमानलिङ्गस्य कारणताया अभ्युपगन्तुमनर्हतया लिङ्गज्ञानस्यैव कारणत्वाभ्युपगमात् ।

नचैवं धूमादिति पञ्चम्यनुपपत्तिर्धूमस्याहेतुत्वादिति वाच्यम्, धूमपदस्य धूमज्ञानलक्षणया तदुपपत्तेः । तदाह—ज्ञायमानंलिङ्गमिति ।

नन्वात्ममानसप्रत्यक्षे आत्ममहत्त्वस्य कारणत्वात्परममहत्परिमाणं न कस्यापि कारणमित्ययुक्तमिति चेद् ? न, आत्मपरममहत्वातिरिक्तपरममहत्परिमाणं न कस्यापि कारणमिति स्वीकारेणादोषात् ।

केचित्तु "कारणत्वं चान्यत्र पारिमाण्डल्यादिभ्यः" इति प्रशस्तपादभाष्यमुपादाय आदिपदेन परममहत्त्वं गृह्यत इति किरणावल्यामुदयनाचार्योक्त्या आत्मपरममहत्परिमाणमपि न कस्यापि कारणमित्यवगम्यते इत्याहुस्तन्न, "कारणत्वं च ज्ञातृधर्मेतरभावकार्यापेक्षया" इति तदुत्तरग्रन्थेन ज्ञानातिरिक्तं प्रत्येवाकारणत्वस्य परममहत्परिमाणे उदयना-[illegible]तया आत्मपरममहत्परिमाणस्य ज्ञानेऽपि न कारणत्वमित्याचार्याभिप्रायस्य वक्तव्यात् । तदाह—तस्यापीत्यादिना ॥ १९ ॥

अन्यथासिद्धिशून्यस्येति । अन्यथासिद्धिशून्यत्वे सति कार्याव्यवहितप्राक्क्षणा-[illegible]न नियमेन विद्यमानत्वं कारणत्वम् । दण्डत्वादौ कार्याव्यवहितप्राक्क्षणावच्छेदेन [illegible]ानत्वसत्त्वादतिव्याप्तिरतः सत्यन्तम् । यत्किञ्चिद्घटव्यक्तिं प्रति रासभस्य नियत-[illegible]मस्ति, तथापि घटजातीयं प्रति सिद्धकारणभावैर्दण्डादिभिरेव तद्व्यक्तेरपि संभवे

समवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम् ।
एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वम् ॥ १७ ॥

अन्यथासिद्धीति । तस्य कारणत्वस्य ॥ १६ ॥ १७ ॥

यत्समवेतं कार्यं भवति ज्ञेयं तु समवायिजनकं तत् ।
तत्रासन्नं जनकं द्वितीयमाभ्यां परं तृतीयं स्यात् ॥ १८ ॥

तत्रेति । समवायिकारणे आसन्नं प्रत्यासन्नं कारणं द्वितीयमसमवायिकारणमित्यर्थः । अत्र यद्यपि तुरीतन्तुसंयोगानां पटासमवायिकारणत्वं स्यात् । एवं वेगादीनामभिघाताद्यसमवायिकारणत्वं स्यात् । एवं ज्ञानादिकमपीच्छाद्यसमवायिकारणं स्यात् । तथापि पटासमवायिकारणलक्षणे तुरीतन्तुसंयोगभिन्नत्वं देयम्। तुरीतन्तुसंयोगस्तु तुरीपटसंयोगं प्रत्यसमवायिकारणं भवत्येव । एवं वेगादिकमपि वेगस्पन्दाद्यसमवायिकारणं भवत्येवेति तत्तत्कार्यासमवायिकारणलक्षणे तत्तद्भिन्नत्वं देयम् । आत्मविशेषगुणानां तु कुत्राप्यसमवयिकारणत्वं नास्ति तेन तद्भिन्नत्वं सामान्यलक्षणे देयमेव।

अत्र समवायिकारणे प्रत्यासन्नं द्विविधं कार्यैकार्थप्रत्यासत्त्या कारणैकार्थप्रत्यासत्त्या च । आद्यं यथा—घटादिकं प्रति कपालसंयोगादिकमसमवायिकारणम् । तत्र कार्येण घटेन सह कारणस्य कपालसंयोगस्यैकस्मिन्कपाले प्रत्यासत्तिरस्ति । द्वितीयं यथा—घटरूपं प्रति कपालरूपमसमवायिकारणम् । तत्र स्वगतरूपादिकं प्रति समवायिकारणं घटः, तेन सह कपालरूपस्यैकस्मिन्कपाले प्रत्यासत्तिरस्ति । तथा च क्वचित्समवायसंबन्धेन क्वचित्स्वसमवायिसमवायसंबन्धेनेति फलितोऽर्थः ।

इत्थं च कार्यैकार्थकारणैकार्थान्यतरप्रत्यासत्त्या समवायिकारणे प्रत्या-

---

मुक्तावलीमयूखः ।

रासभोऽन्यथासिद्ध इति पञ्चमान्यथासिद्धिमत्यपि तद्घटत्वावच्छिन्नं प्रति तद्रासभे घटत्वावच्छिन्नेऽनन्यथासिद्धतया तद्रासभेऽतिव्याप्तिवारणाय नियतेति । नियतविद्यमानत्वमित्यस्य नियतविद्यमानजातीयत्वमित्यर्थः । तेनारण्यस्थदण्डेऽपि कारणत्वोपपत्तिरित्यलम् ॥ १६ ॥ १७ ॥

अत्र यद्यपीति । ननु तुरीतन्तुसंयोगस्य पटासमवायिकारणत्वे को दोष इति चेत्? न, असमवायिकारणनाशस्य द्रव्यनाशकत्वनियमेन तुरीतन्तुसंयोगनाशे पटनाशापत्तेः ।

न चोक्तनियमे मानाभावः, समवायिकारणनाशे द्रव्यनाश इति नियमस्वीकारेणैव द्रव्यनाशोपपत्तेरिति वाच्यम्, द्व्यणुकनाशान्यथानुपपत्त्या तत्कल्पनात् ।

इत्थंचेति । यत्कार्यसमवायिकारणे समवायस्वसमवायिसमवेतत्वान्यतरसम्बन्धेन विद्यमानं सत्कारणं ज्ञानादिभिन्नं तत्कार्यं प्रत्यसमवायिकारणमिति पर्यवसन्नम् ।

ननु ज्ञानादीनां किमसमवायिकारणमिति चेदात्ममनः संयोग एवेति गृहाण ।

सन्नं कारणं ज्ञानादिभिन्नमसमवायिकारणमिति सामान्यलक्षणं पर्यवसन्नम्। आभ्यां समवायिकारणासमवायिकारणाभ्यां परं भिन्नं कारणं तृतीयं निमित्तकारणमित्यर्थः ॥ १८ ॥

इदानीमन्यथासिद्धत्वमेव कियतां पदार्थानामत आह—

येन सह पूर्वभावः, कारणमादाय वा यस्य,।
अन्यं प्रति पूर्वभावे ज्ञाते यत्पूर्वभावविज्ञानम्,॥ १९ ॥
जनकं प्रति पूर्ववृत्तितामपरिज्ञाय न यस्य गृह्यते,।
अतिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्वभाविनः,॥ २० ॥

येनेति । यत्कार्यं प्रति कारणस्य पूर्ववृत्तिता येन रूपेण गृह्यते तत्कार्यं प्रति तद्रूपमन्यथासिद्धमित्यर्थः । यथा घटं प्रति दण्डत्वमिति ।

द्वितीयमन्यथासिद्धमाह—कारणमिति । यस्य स्वातन्त्र्येणान्वयव्यति-

मुक्तावलीमयूखः ।

ननु "समवायिकारणासमवायिकारणभिन्नं कारणं निमित्तकारणम्" इदं लक्षणमयुक्तं तुरीपटसंयोगासमवायिकारणस्य तुरीतन्तुसंयोगस्य पटं प्रति निमित्तत्वानापत्तेरिति चेद् ? न, समवायिकारणत्वासमवायिकारणत्वभिन्नकारणत्वं निमित्तकारणत्वमित्यर्थे तात्पर्येणादोषात् ॥ १८ ॥

यत्कार्यं प्रतीति । घटकार्यं प्रति दण्डस्य पूर्ववर्तिता दण्डत्वेन गृह्यते, दण्डत्वावच्छिन्नस्य घटं प्रति कारणत्वादिति घटं प्रति दण्डत्वमन्यथासिद्धमिति समन्वयः ।

यस्य स्वातन्त्र्येणेति । घटकार्यं प्रति दण्डरूपस्य अन्वयव्यतिरेको घटकारणीभूतदण्डमादायैव गृह्येते न स्वातन्त्र्येणेति घटं प्रति दण्डरूपमन्यथासिद्धम्, "यत्र स्वाश्रयजन्यभ्रमिमत्त्वसम्बन्धेन दण्डरूपं तत्र घटः" इत्यन्वये "यत्रोक्तसम्बन्धेन दण्डरूपाभावस्तत्र घटाभाव" इति व्यतिरेके च स्वाश्रयपदेन दण्डस्यैव ग्रहणेन दण्डमादायैवान्वयव्यतिरेकयोर्ग्रहात् । स्वं दण्डरूपं, तदाश्रयो दण्डः, तज्जन्यभ्रमणवत्त्वं चक्रे, तत्रैव घट इति बोध्यम् । अन्वयव्यतिरेकयोः स्वातन्त्र्यं च स्वभिन्नप्रकृतकार्यकारणान्वयव्यतिरेकाप्रयुक्तत्वम्, तच्च प्रकृतान्वयव्यतिरेकयोर्नास्तीति सर्वं सुस्थम् ।

न च "कारणमादाय वा यस्य" इति द्वितीयान्यथासिद्धिलक्षणे कारणत्वस्य, कारणत्वलक्षणे अन्यथासिद्धेश्च प्रवेशेनान्योन्याश्रयप्रसङ्ग इति वाच्यम्, पृथगन्वयव्यतिरेकशालित्वरूपकारणत्वस्य अन्यथासिद्धिलक्षणे प्रवेशेनान्योन्याश्रयाभावात् ।

ननु द्वितीयान्यथासिद्धिलक्षणस्य दण्डत्वेऽपि सद्भावात् प्रथमान्यथासिद्ध्यनङ्गीकार एवेति चेत् ? न, स्वातन्त्र्येण, यत्कार्यनिरूपितान्वयव्यतिरेकशून्यत्वे सति तत्कार्यकारणावच्छिन्नस्वनिष्ठतत्कार्यनिरूपितनियतपूर्ववृत्तित्वग्रहविशेष्यताश्रयस्तत्कार्यं प्रत्यन्यथासिद्धमित्येवरूपाया द्वितीयान्यथासिद्धेर्दण्डत्वेऽसत्त्वेन प्रथमान्यथासिद्धेरावश्यकत्वात् । तथाहि, दण्डरूपं घटनियतपूर्ववर्ति इति पूर्ववर्तित्वग्रहे घटकार्यकारणीभूतो यो दण्डस्तदवच्छिन्ना घटनियतपूर्ववर्तित्वनिष्ठप्रकारतानिरूपितदण्डरूपनिष्ठा विशेष्यता वर्तते, तदाश्रयो दण्डरूपं

रेकौ न स्तः, किं तु कारणमादायैवान्वयव्यतिरेकौ गृह्येते तदन्यथासिद्धम् यथा दण्डरूपम् ।

तृतीयमाह । अन्यं प्रतीति । अन्यं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम् । यथा घटादिकं प्रत्याकाशस्य । तस्य हि घटादिकं प्रति कारणत्वमाकाशत्वेनैव स्यात् । आकाशत्वं हि शब्दसमवायिकारणत्वम् । एवं च तस्य शब्दं प्रति जनकत्वं गृहीत्वैव घटादिकं प्रति जनकत्वं ग्राह्यमतस्तदन्यथासिद्धम् ।

ननु शब्दाश्रयत्वेन तस्य कारणत्वे काऽन्यथासिद्धिरिति चेत्? पञ्चमीति गृहाण ।

नन्वाकाशस्य शब्दं प्रति जनकत्वे किमवच्छेदकमिति चेत्? कवत्वादिकं विशेषपदार्थो वेति ।

चतुर्थमन्यथासिद्धमाह—जनकं प्रतीति । यत्कार्यजनकं प्रति पूर्ववृत्ति

---

मुक्तावलीमयूखः ।

स्वतन्त्रान्वयव्यतिरेकशून्यं चेति भवति समन्वयः ।

दण्डत्वं घटनियतपूर्ववर्तीति ग्रहे च दण्डत्वनिष्ठा विशेष्यता दण्डत्वत्वावच्छिन्ना घटकारणीभूतदण्डावच्छिन्नेति न दोष इति । कपालसंयोगो घटपूर्ववर्तीति पूर्ववर्तित्वप्र कपालसंयोगनिष्ठविशेष्यतायाः घटकारणकपालावच्छिन्नतया कपालसंयोगेऽतिव्याप्तिः सत्यन्तम् । दण्डत्वेऽतिव्याप्तिवारणाय विशेष्यम् ।

तथाच स्वविशिष्टं स्वं प्रत्यन्यथासिद्धमिति लक्षणं पर्यवसन्नम् । वैशिष्ट्यञ्च स्वनि रूपितस्वतन्त्रान्वयव्यतिरेकशून्यत्व—स्वविशिष्टविशेष्यताश्रयत्वोभयसम्बन्धेन । अत्र वैशिष्ट्यं स्वकारणावच्छिन्नत्व—स्वनिरूपितनियतपूर्ववृत्तित्वनिष्ठप्रकारतानिरूपितत्वोभयस म्बन्धेन । स्वं कार्यमिति बोध्यम् ।

प्रथमान्यथासिद्धिस्तु—तद्धर्मावच्छिन्ननिरूपितनियतपूर्ववर्तित्वग्रहविशेष्यतावच्छे दकत्वे सति तद्धर्मावच्छिन्नं प्रति स्वतन्त्रान्वयव्यतिरेकशून्यत्वं तद्धर्मावच्छिन्नं प्रत्यन्यथा सिद्धत्वम् । तद्धर्मपदेन घटत्वम् । समन्वयस्तु दण्डो घटनियतपूर्ववर्तीति ग्रहे घटत्वाव च्छिन्ननियतपूर्ववर्तित्वप्रकारकज्ञानीयविशेष्यतावच्छेदकत्वं स्वतन्त्रान्वयव्यतिरेकशून्यत्वं च दण्डत्वस्येति बोध्यः । दण्डरूपेऽतिव्याप्तिवारणाय सत्यन्तम् । कपालसंयोगो घटपूर्ववर्ती तिग्रहमादाय कपालेऽतिव्याप्तिवारणाय विशेष्यम् ।

तथाच—स्वविशिष्टं स्वावच्छिन्नं प्रत्यन्यथासिद्धम् । वैशिष्ट्यञ्च—स्वावच्छिन्ननिरूपि तनियतपूर्ववर्तित्वनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकत्व—स्वावच्छिन्ननिरूपितस्वतन्त्रा न्वयव्यतिरेकशून्यत्वोभयसम्बन्धेन । स्वपदेन कार्यतावच्छेदकीभूतो धर्मो ग्राह्य इति ।

अन्यं प्रतीति । ननु कुलालपितुः कुलालं प्रति पूर्ववर्तित्वं गृहीत्वैव घटं प्रति पूर्व वर्तित्वं गृह्यते, इति कुलालपितुरनेनैवान्यथासिद्धत्वसंभवे चतुर्थान्यथासिद्धिः किमर्थेति चेत्? न, अन्यं प्रतीत्यत्रान्यपदेन प्रकृतकार्याजनकस्य ग्रहणेन कुलालस्य घटजनकत्वे तस्यान्यपदेन ग्रहणासंभवात् ।

त्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यं प्रत्यन्यथा-सिद्धत्वम् । यथा कुलालपितुर्घटं प्रति । तस्य हि कुलालपितृत्वेन घटं प्रति जनकत्वे एवान्यथासिद्धिः । कुलालत्वेन जनकत्वे त्विष्टापत्तिः, कुलालमात्रस्य घटं प्रति जनकत्वात् ।

पञ्चममन्यथासिद्धमाह—अतिरिक्तमिति । अवश्यक्लृप्तनियतपूर्ववर्तिन एव कार्यसंभवे तद्भिन्नमन्यथासिद्धमित्यर्थः । अत एव प्रत्यक्षे महत्त्वं कारणम् अनेकद्रव्यवत्त्वमन्यथासिद्धम् । तत्र हि महत्त्वमवश्यक्लृप्तं तेनानेकद्रव्यवत्त्वमन्यथासिद्धम् ।

नच वैपरीत्ये किं विनिगमकमिति वाच्यम्, महत्त्वत्वजातेः कारणतावच्छेदकत्वे लाघवात् ॥ १९ ॥ २० ॥

एते पञ्चान्यथासिद्धा दण्डत्वादिकमादिमम् ।
घटादौ दण्डरूपादि द्वितीयमपि दर्शितम् ॥ २१ ॥
तृतीयं तु भवेद्व्योम कुलालजनकोऽपरः ।
पञ्चमो रासभादिः स्यादेतेष्वावश्यकस्त्वसौ ॥ २२ ॥

रासभादिरिति । यद्यपि यत्किंचिद्घटव्यक्तिं प्रति रासभस्य नियतपूर्ववर्तित्वमस्ति, तथापि घटजातीयं प्रति सिद्धकारणभावैर्दण्डादिभिरेव तद्व्यक्तेरपि संभवे रासभोऽन्यथासिद्ध इति भावः ।

एतेष्विति । एतेषु पञ्चस्वन्यथासिद्धेषु मध्ये पञ्चमोऽन्यथासिद्ध आव-

---

मुक्तावलीमयूखः ।

कुलालपितृत्वेनेति । अयं भावः—कुलालपितृत्वं हि कुलालनिष्ठजन्यतानिरूपितपुंस्त्वसमानाधिकरणजनकतावत्त्वम् । जनकता च पूर्ववर्तित्वघटितेति कुलालपितृत्वेन घटं प्रति जनकत्वाङ्गीकारे कुलालपूर्ववर्तित्वग्रहस्य कुलालपितर्यावश्यकत्वम् । अन्यथा पूर्ववर्तित्वघटितजनकत्वग्रह एव न स्यात् । एवं तृतीयान्यथासिद्ध्युदाहरणे शब्दसमवायिकारणत्वेन आकाशस्य कारणत्वाङ्गीकारे एव घटं प्रत्याकाशमन्यथासिद्धं कारणत्वस्य पूर्ववर्तित्वघटितत्वात् ।

शब्दाश्रयत्वेन कारणत्वे तु आश्रयत्वस्य पूर्ववर्तित्वाघटितत्वेन नास्योदाहरणं तत्, किन्तु पञ्चमान्यथासिद्धत्वस्येति बोध्यम् ।

अवश्यक्लृप्तेति । लघुनियतपूर्ववर्तिन एव कार्यसंभवे तद्भिन्नमन्यथासिद्धमित्यर्थः ।

लाघवादिति । अयं भावः—अनेकद्रव्यत्वं नानेकद्रव्यसमवेतत्वं, तस्य द्व्यणुकेऽपि सत्त्वेन द्व्यणुकप्रत्यक्षापत्तेः । अनेकद्रव्यसमवेतसमवेतत्वं तदित्यपि न, तस्यात्मन्यसत्त्वेनाप्रत्यक्षत्वापत्तेः । किन्त्वणुभिन्नद्रव्यत्वमनेकद्रव्यत्वम् । एवं च महत्त्वस्य प्रत्यक्षं प्रति कारणत्वाङ्गीकारे महत्त्वत्वजातेः कारणतावच्छेदकतया लाघवम् । अनेकद्रव्यत्वस्य कारणत्वे तु गौरवम्, तस्य गुरुशरीरत्वात् । लाघवं त्रिविधं—शरीरकृतम् उपस्थितिकृतं संबन्धकृतं च । तत्राद्यमुक्तम् । द्वितीयं—गन्धं प्रति गन्धप्रागभावस्य हेतुता शीघ्रो-

श्यकः, तेनैव परेषां चरितार्थत्वात्। तथाहि—दण्डादिभिरवश्यक्लृप्तनि-तपूर्ववर्तिभिरेव कार्यसंभवे दण्डत्वादिकमन्यथासिद्धम्।

न च वैपरीत्ये किं विनिगमकमिति वाच्यम्, दण्डत्वस्य कारण दण्डघटितपरस्परायाः संबन्धत्वकल्पने गौरवात्। एवमन्येषामप्यनेनै चरितार्थत्वं संभवतीति बोध्यम्॥ २१॥ २२॥

समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम्।
गुणकर्ममात्रवृत्ति ज्ञेयमथाप्यसमवायिहेतुत्वम्॥ २३॥

समवायीति। स्पष्टम्।

गुणकर्मेति। असमवायिकारणत्वं गुणकर्मभिन्नानां वैधर्म्यं न; गुणकर्मणोः साधर्म्यमित्यत्र तात्पर्यम्। अथवा असमवायिकारणवृत्तिस त्ताभिन्नजातिमत्त्वं तदर्थः। तेन ज्ञानादीनामसमवायिकारणत्वविरहेऽ न क्षतिः॥ २३॥

अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते।

अन्यत्रेति। नित्यद्रव्याणि परमाण्वाकाशादीनि विहायाश्रितत्वं साध र्म्यमित्यर्थः। आश्रितत्वं तु समवायादिसंबन्धेन वृत्तिमत्त्वम्, विशेषणतय नित्यानामपि कालादौ वृत्तेः।

---

मुक्तावलीमयूखः।

पस्थितिकत्वात्, न तु रूपप्रागभावस्येति। तृतीयं दण्डत्वादेर्घटकारणत्वे स्वाश्रयभ्र मिमत्त्वादि संबन्धकृतं गौरवमिति॥ १९-२२॥

ननु गुणकर्ममात्रवृत्तीत्यनेन गुणकर्मणोरसमवायिकारणत्वं साधर्म्यं प्रतीयते, तच्चायुक्त ज्ञानादीनां कुत्राप्यसमवायिकारणत्वं नास्तीति पूर्वमुक्तत्वादित्यत आह—

ननु साधर्म्यप्रकरणे वैधर्म्यकथनयुक्तमित्यरुचेराह—

अथवेति। असमवायिकारणवृत्तीत्यनुपादाने सत्ताभिन्नद्रव्यत्वजातिमादाय द्रव्ये ऽतिव्याप्तिः। सत्ताभिन्नेत्यनुपादाने सत्तामादायोक्तातिव्याप्तितादवस्थ्यम्। जातीत्य नुक्तौ धर्मपदनिवेशे द्रव्यगुणान्यतरत्वमादाय उक्तातिव्याप्तितादवस्थ्यमिति बोध्यम्। असमवायिकारणवृत्तिसत्ताभिन्नगुणत्वजातेर्ज्ञानादौ सत्त्वात् समन्वयः।

नित्यद्रव्येभ्योऽन्यत्राश्रितत्वं साधर्म्यमित्ययुक्तं, गगनं सर्वदैवास्तीति प्रतीत्या कालिकसंबन्धेन नित्यद्रव्यस्याकाशस्यापि आश्रितत्वादत आह—

आश्रितत्वं च समवायादिसंबन्धेन वृत्तिमत्त्वमिति। सर्वाधारतानियामक कालिकसंबन्धातिरिक्तसंबन्धेन वृत्तिमत्त्वमिति यावत्।

न च संयोगेन परमाणोरपि वृत्तितया परमाणावतिव्याप्तिरिति वाच्यम्, पतनप्रति बन्धकीभूतसंयोगस्यैव वृत्तिनियामकतया गगनपरमाण्वादिसंयोगस्य वृत्त्यनियामकत्वात्।

न च परमाण्वादौ पतनप्रतिबन्धकीभूतः संयोगः किं नेष्यते इति वाच्यम्, जन्य-

इदानीं द्रव्यस्यैव विशिष्य साधर्म्यं वक्तुमारभते—

क्षित्यादीनां नवानां तु द्रव्यत्वं गुणयोगिता ॥ २४ ॥

क्षितिर्जलं तथा तेजः पवनो मन एव च ।

परापरत्वमूर्तत्वक्रियावेगाश्रया अमी ॥ २५ ॥

क्षित्यादीनामिति । स्पष्टम् ।

क्षितिरिति । पृथिव्यप्तेजोवायुमनसां परत्वापरत्ववत्त्वं मूर्तत्वं क्रियावत्त्वं वेगवत्त्वं च साधर्म्यम् । नच यत्र घटादौ परत्वमपरत्वं वा नोत्पन्नं तत्राव्याप्तिरिति वाच्यं, परत्वादिसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् । मूर्तत्वमपकृष्टपरिमाणवत्त्वम् । तच्च तेषामेव, गगनादिपरिमाणस्य कुतोऽप्यपकृष्टत्वाभावात् । पूर्ववत् कर्मवत्त्वं कर्मसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं, वेगवत्त्वं वेगवद्वृत्तिद्रव्याप्यजातिमत्त्वं च बोध्यम् ॥ २४ ॥ २५ ॥

कालखात्मदिशां सर्वगतत्वं परमं महत् ।

क्षित्यादि पञ्च भूतानि चत्वारि स्पर्शवन्ति हि ॥ २६ ॥

कालेति । कालाकाशात्मदिशां सर्वगतत्वं = सर्वमूर्तसंयोगित्वं, परममहत्त्वं च साधर्म्यम् । परममहत्त्वं जातिविशेषः, अपकर्षानाश्रयपरिमाणत्वं वा ।

मुक्तावलीमयूखः ।

गुरुत्वस्य पतनकारणतया तदभावादेव परमाणुगगनादौ पतनस्याभावेन तादृश संयोगस्य पतनप्रतिबन्धकत्वे मानाभावात् ।

परत्वादिसमानाधिकरणेति । आत्मन्यतिव्याप्तिवारणाय समानाधिकरणान्तम् । सत्तामादाय तत्रैवातिव्याप्तिवारणाय द्रव्यत्वव्याप्येति । स्वस्यापि स्वव्याप्यत्वमिति सिद्धान्तात् तादृशं द्रव्यत्वमादायोक्तातिव्याप्तिवारणाय द्रव्यत्वभिन्नत्वेनापि जातिर्विशेषणीया । आत्मपृथिव्यन्यतरत्वमादायात्मन्यतिव्याप्तिवारणाय जातीति ।

अपकृष्टेति । न च परमाणुपरिमाणस्यापकृष्टत्वाभावात्तत्राव्याप्तिरिति वाच्यम्, अपकृष्टपरिमाणवत्त्वमित्यस्य परममहत्परिमाणभिन्नपरिमाणवत्त्वमित्यर्थे तात्पर्येणादोषात् ।

कर्मसमानाधिकरणेति । आत्मन्यतिव्याप्तिवारणाय समानाधिकरणान्तम् । सत्तामादाय तत्रैवातिव्याप्तिवारणाय द्रव्यत्वव्याप्येति । आकाशपृथिव्यन्यतरत्वमादायाकाशेऽतिव्याप्तिवारणाय जातीति । जातिमत्त्वं च समवायेन बोध्यम् ।

वेगवद्वृत्तीति । आत्मन्यतिव्याप्तिवारणाय वृत्त्यन्तम् । सत्तामादाय तत्रैवातिव्याप्तिवारणाय द्रव्यत्वव्याप्येति । आकाशपृथिव्यन्यतरत्वमादायाकाशेऽतिव्याप्तिवारणाय जातीति ॥ २४ ॥ २५ ॥

ननु कालादौ स्पन्दासम्भवेन सर्वगतत्वं तत्राव्याप्तमत आह—सर्वमूर्तेति ।

परममहत्त्वं जातिविशेष इति । गुणपरात्परममहच्छब्दात्त्वप्रत्ययः अत्र इति

क्षित्यादीति। पृथिव्यप्तेजोवाय्वाकाशानां भूतत्वं साधर्म्यम्। तच्च बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्। अत्र ग्राह्यत्वं लौकिकप्रत्यक्षस्वरूपयोग्यत्वं बोध्यम्। तेन ज्ञातो घट इत्यादिप्रत्यक्षे ज्ञानस्याप्युपनीतभानविषयत्वाच्च द्रव्यात्मनि नातिव्याप्तिः। न वा प्रत्यक्षाविषयरूपादिमति परमाण्वादावव्याप्तिः, तस्यापि स्वरूपयोग्यत्वात्। महत्त्वलक्षणकारणान्तरासन्निधानाच्च न प्रत्यक्षम्। अथवा आत्मावृत्तिविशेषगुणवत्त्वं तत्त्वम्।

चत्वारीति। पृथिव्यप्तेजोवायूनां स्पर्शवत्त्वम्॥ २६॥

द्रव्यारम्भश्चतुर्षु स्यादथाकाशशरीरिणाम्।
अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते॥ २७॥

मुक्तावलीमयूखः।

बोध्यम्। यदि च परममहत्त्वत्वमिति पाठस्तदा द्रव्यपरात्परममहच्छब्दात्स्वप्रत्यये परममहत्त्वमिति, स च गुणस्ततस्त्वप्रत्यये परममहत्त्वत्वं जातिरिति ध्येयम्।

ननु परममहत्त्वस्य कारणताद्यनवच्छेदकत्वेन जातित्वसाधकप्रमाणविरहात्कथं जातिबाधकत्वम्? 'अहं परममहान्' इति प्रतीतिविषयपरममहत्त्वस्य गगनपरिमाणसाधारणस्य जातित्वसंभवेऽपि आत्मपरिमाणमयोग्यमिति टीकाकृन्मते अहं परममहानिति प्रतीतेरभावात्तस्या अपि न जातित्वसाधकत्वमित्यरुचेराह—अपकर्षानाश्रयपरिमाणत्वं चेति।

ननु परिमाणनिष्ठोत्कर्षापकर्षयोः स्वसजातीयपरिमाणावधिकत्वनियमः। एवं चाणुपरमाणेषु द्व्यणुकपरिमाणमेवापकर्षाश्रयो न परमाणुपरिमाणमिति परमाणावतिव्याप्तिरिति चेत्

न, अपकर्षानाश्रयमहत्परिमाणवत्त्वमिति विवक्षणेन परमाणौ महत्परिमाणाभावेनातिव्याप्त्यनवकाशात्।

बहिरिन्द्रियेति। अन्तरिन्द्रिय (मनो) ग्राह्यसुखादिरूपविशेषगुणस्यात्मनि सत्त्वेनातिव्याप्तिवारणाय बहिःपदम्। परमाणुरूपादेरप्रत्यक्षतया बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वस्य परमाणावव्याप्तिरतो बहिरिन्द्रियग्राह्यजातिमद्विशेषगुणवत्त्वं भूतत्वमिति वक्तव्यम्। ततश्च संयोगप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य कारणतया कालादिवृत्तिसंयोगस्याप्रत्यक्षत्वेऽपि बहिरिन्द्रियग्राह्यजातिमत्त्वस्य तादृशसंयोगेऽपि सत्त्वेन कालादावतिव्याप्तिरतो विशेषेति। द्रव्यत्वमादाय कालादावतिव्याप्तिवारणाय गुणेति।

सुरभि चन्दनखण्डमित्यत्र संयोगसंनिकर्षेण चन्दनखण्डस्य स्वसंयुक्तमनःसंयुक्तात्मसमवेतज्ञानविषयत्वरूपज्ञानलक्षणसंनिकर्षेण सौरभस्य चाक्षुषं भवति। तथा ज्ञातो घट इति प्रत्यक्षे स्वसंयुक्तमनःसंयुक्तात्मसमवेतज्ञानविषयत्वरूपज्ञानलक्षणसन्निकर्षेण ज्ञानस्यापि चाक्षुषमिति बहिरिन्द्रियग्राह्यजातीयज्ञानवत्त्वस्यात्मनि सत्त्वादव्याप्तिरतो ग्राह्यत्वं लौकिकसंनिकर्षेण बोध्यम्।

तथा च बहिरिन्द्रियजन्यलौकिकसन्निकर्षप्रयोज्यज्ञानविषयजातिमद्विशेषगुणवत्त्वं फलितम्।

अत्र ग्राह्यत्वं लौकिकप्रत्यक्षस्वरूपयोग्यत्वं बोध्यमिति। नन्वेवं चक्षुरादिगतरूपा-

द्रव्यारम्भ इति । पृथिव्यप्तेजोवायुषु चतुर्षु द्रव्यारम्भकत्वं साधर्म्यम् । न च द्रव्यानारम्भके घटादावव्याप्तिः, द्रव्यसमवायिकारणवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात् ।

आकाशशरीरिणामिति । आकाशात्मनामव्याप्यवृत्तिक्षणिकविशेषगुणवत्त्वं साधर्म्यमित्यर्थः । आकाशस्य विशेषगुणः शब्दः, स चाव्याप्यवृत्तिर्यदा किंचिदवच्छेदेन शब्द उत्पद्यते तदाऽन्यावच्छेदेन तदभावस्यापि सत्त्वात् । क्षणिकत्वं च तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम् । योग्यविभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वात्प्रथमशब्दस्य द्वितीयशब्देन नाशः । एवं ज्ञानादीनामपि । ज्ञानादिकं यदाऽऽत्मनि विभौ शरीराद्यवच्छेदेनोत्पद्यते तदा घटाद्यवच्छेदेन तदभावोऽस्त्येव । एवं ज्ञानादिकमपि क्षणद्वयावस्थायि । इत्थं चाव्याप्यवृत्तिविशेषगुणवत्त्वं क्षणिकविशेषगुणवत्त्वं चार्थः । पृथिव्यादौ रूपादिर्विशेषगुणोऽस्तीत्यतोऽव्याप्यवृत्तीत्युक्तम् । पृथिव्यादावव्याप्यवृत्तिः संयोगादिरस्तीत्यतो विशेषगुणेत्युक्तम् ।

न च रूपादीनामपि कदाचित्तृतीयक्षणे नाशसंभवात्क्षणिकविशेषगुणवत्त्वं क्षित्यादावतिव्याप्तमिति वाच्यम्, चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्वि-

---

मुक्तावलीमयूखः ।

द्विशेषगुणानामनुद्भूतत्वेन बहिरिन्द्रियग्रहणायोग्यत्वाच्चक्षुरादावव्याप्तिः, स्वरूपयोग्यत्वमपहाय बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयजातिमद्विशेषगुणवत्त्वविवक्षणेऽपि गौरवमस्त्येवेत्यरुचेराह—आत्मावृत्तीति । ज्ञानमादाय आत्मन्यतिव्याप्तिवारणाय आत्मावृत्तीति । दैशिकपरत्वापरत्वे आदाय मनस्यतिव्याप्तिवारणाय विशेषेति ॥ २६ ॥

द्रव्यसमवायिकारणेति । वृत्त्यन्तानुपादाने द्रव्यत्वव्याप्यात्मत्वजातिमादायात्मन्यतिव्याप्तिरतो वृत्त्यन्तम् । द्रव्यत्वमपि द्रव्यत्वव्याप्यमित्युक्तदोषतादवस्थ्यमतो द्रव्यत्वभिन्नेति निवेश्यम् । ज्ञानसमवायिकारणात्मवृत्त्यात्मत्वजातिमादायात्मनि अतिव्याप्तिवारणाय द्रव्यपदम् ।

मूले विशेषगुण इष्यते इति । विशेषगुणश्च—

"बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः ।
अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः" ।
इति वक्ष्यमाणा बोध्याः ।

योग्यविशेषगुणेति । यत्र प्रतियोगितासम्बन्धेन योग्यविभुविशेषगुणनाशः तत्र स्वसामानाधिकरण्य—स्वाव्यवहितपूर्ववर्तित्वोभयसम्बन्धेन योग्यविभुविशेषगुणः इति सामानाधिकरण्येन नाशकत्वं बोध्यम् । कार्यतावच्छेदके योग्यत्वानिवेशे प्रायश्चित्तादिजन्यादृष्टनाशे व्यभिचारः स्यादतस्तन्निवेशितम् । योग्यत्वं च लौकिकसाक्षात्कारविषय—निर्विकल्पकान्यतरत्वम् तच्चादृष्टे नास्तीति न दोषः । रूपादिनाशे व्यभिचारवारणाय विभ्विति । संयोगनाशे व्यभिचारवारणाय विशेषेति ।

चतुःक्षणवृत्तीति । चतुःक्षणवृत्तीनि यानि जन्यानि घटादीनि तद्वृत्ति जातिर्ज्ञान-

शेषगुणवत्त्वस्य तदर्थत्वात् । अपेक्षाबुद्धिः क्षणत्रयं तिष्ठति, क्षणचतुष्टयं तु न किमपि जन्यज्ञानादिकं तिष्ठति ।

रूपत्वादिकं तु क्षणचतुष्टयस्थायिन्यपि रूपादौ वर्तत इति तद्व्युदासः । ईश्वरज्ञानस्य चतुःक्षणवृत्तित्वाज्ज्ञानत्वस्य तद्वृत्तित्वाज्जन्येत्युक्तम् । श्रद्धाकाशजीवात्मनोः साधर्म्यं तदा जन्येति न देयम् । द्वेषत्वादिकमादाय लक्षणसमन्वयात्, परममहत्त्वस्य तादृशगुणत्वाच्च चतुर्थक्षणे द्वित्वादीनामपि नाशाभ्युपगमाद् द्वित्वादीनामपि तथात्वात्तद्वारणाय विशेषेति । त्रिक्षणवृत्तित्वं वा वाच्यम् । द्वेषत्वादिकमादायात्मनि लक्षणसमन्वयः ॥ २७ ॥

रूपद्रवत्वप्रत्यक्षयोगिनः प्रथमास्त्रयः ।
गुरुणी द्वे रसवती द्वयोर्नैमित्तिको द्रवः ॥ २८ ॥

पृथिव्यप्तेजसां रूपवत्वं, द्रवत्ववत्त्वं, प्रत्यक्षविषयत्वं च साधर्म्यमित्यर्थः । न च चक्षुरादीनां भर्जनकपालस्थवन्हेरूष्मणश्च रूपवत्त्वे किं मानमिति वाच्यम्, तत्रापि तेजस्त्वेन रूपानुमानात् । एवं वाय्वानीतपृथिवीजलतेजोभागानामपि पृथिवीत्वादिना रूपानुमानं बोध्यम् ।

न च घटादौ द्रुतसुवर्णादिभिन्ने तेजसि च द्रवत्ववत्त्वमव्याप्तमिति वा-

---

मुक्तावलीमयूखः ।

त्वादिः तद्वान् विशेषगुणो ज्ञानादिः, तद्वत्त्वमात्मादाविति लक्षणसमन्वयः ।

ननु प्रथमोपस्थितत्वात्त्रिक्षणवृत्तीत्येव वक्तव्ये चतुःक्षणवृत्तीति कथनं किमर्थमत आह—अपेक्षाबुद्धिः क्षणत्रयमिति ।

अत्रेदं बोध्यम्, प्रथमम् अयमेकः अयमेकः इत्येवंरूपा अपेक्षाबुद्धिः, ततो द्वित्वोत्पत्तिः, ततो विशेषणज्ञानं द्वित्वत्वनिर्विकल्पात्मकम्, ततो द्वित्वत्वविशिष्टद्वित्वप्रत्यक्षम् अपेक्षाबुद्धिनाशश्च, ततो द्वित्वनाश, इति प्रक्रिया ।

एवं च अपेक्षाबुद्धिः क्षणत्रयं तिष्ठति । यद्यपि जन्यज्ञानानां द्विक्षणमात्रस्थायित्वं योग्यविभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वनियमात् तथापि अपेक्षाबुद्धेर्द्विक्षणमात्रावस्थायित्वे द्वित्वत्वनिर्विकल्पककालेऽपेक्षाबुद्धेर्नाशे तदनन्तरं द्वित्वस्यैव नाशाद् विषयाभावेन द्वित्वस्य प्रत्यक्षं न स्यादतस्त्रिक्षणावस्थायित्वं कल्प्यते इति ।

ज्ञानत्वादेर्जन्यवृत्तित्वादसम्भववारणाय चतुः क्षणवृत्तीति । चतुःक्षणवृत्त्यवृत्तीत्याद्युक्तौ ईश्वरज्ञानस्य नित्यतया चतुःक्षणवृत्तित्वेन ज्ञानत्वस्यातादृशत्वात्तदादाय समन्वयो न स्यादतो जन्येति । चतुःक्षणवृत्तिजन्यावृत्तिपरमहत्त्वत्वजातिमद्गुणवत्त्वस्य कालादौ सत्त्वादतिव्याप्तिरतो विशेषेति ।

ननु परममहत्त्वत्वं न जातिः किन्तु अपकर्षानाश्रयपरिमाणत्वमित्युक्तं, तथा च कां तदादायातिप्रसङ्ग इत्यत आह—चतुर्थक्षणे इति ।

प्रथमोपस्थितत्वरूपलाघवमभिसंधायाह—त्रिक्षणवृत्तित्वं वेति । त्रिक्षणवृत्त्यवृत्तिजातिमद्विशेषगुणवत्त्वमिति लक्षणं निष्पन्नम् ।

च्यम्, द्रवत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। घृतजतुप्रभृतिषु पृथिवीषु, जलेषु, द्रुतसुवर्णादौ तेजसि, च द्रवत्वसत्त्वात्तत्र च पृथिवीत्वादिसत्त्वात्तदादाय सर्वत्र लक्षणसमन्वयः।

न च प्रत्यक्षविषयत्वं परमाण्वादावव्याप्तमतिव्याप्तं च रूपादाविति वाच्यम्, चाक्षुषलौकिकप्रत्यक्षविषयवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। आत्मन्यतिव्याप्तिवारणाय चाक्षुषेति।

गुरुणी इति। गुरुत्ववत्त्वं रसवत्त्वं च पृथिवीजलयोरित्यर्थः। न च घ्राणेन्द्रियादीनां वाय्वानीतपार्थिवादिभागानां च रसादिमत्त्वे किं मानमिति वाच्यम्, तत्रापि पृथिवीत्वादिना तदनुमानात्।

द्वयोरिति। पृथिवीतेजसोरित्यर्थः। न च नैमित्तिकद्रवत्ववत्त्वं घटादौ वह्न्यादौ चाव्याप्तमिति वाच्यम्, नैमित्तिकद्रवत्वसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्॥ २८॥

आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः।

पृथिव्यप्तेजोवाय्वाकाशात्मनां विशेषगुणवत्त्वमित्यर्थः।

यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत्॥ २९॥

ज्ञेयत्वादिकं विहायेति बोध्यम्। तत्तु न कस्यापि वैधर्म्यं, केवलान्वयित्वात्॥ २९॥

स्पर्शादयोऽष्टौ वेगाख्यः संस्कारो मरुतो गुणाः।
स्पर्शाद्यष्टौ रूपवेगौ द्रवत्वं तेजसो गुणाः॥ ३०॥
स्पर्शादयोऽष्टौ वेगश्च गुरुत्वं च द्रवत्वकम्।
रूपं रसस्तथा स्नेहो वारिण्येते चतुर्दश॥ ३१॥

---

मुक्तावलीमयूखः।

न चैवं त्रिक्षणवृत्तिर्जन्याऽपेक्षाबुद्धिः, तद्वृत्तिरेव ज्ञानत्वम् इति कथं तदादाय समन्वय इति वाच्यम्, द्वेषत्वजातेस्तथात्वेन तामादाय लक्षणसमन्वयात्।

न च परमेश्वरे द्वेषाभावात्तत्र लक्षणसमन्वयो न स्यादिति वाच्यम्, आकाशजीवात्मनोः साधर्म्यमित्युक्ततया परमेश्वरे लक्षणागमनेऽपि क्षत्यभावात्। यदि च परमात्मनोऽपि साधर्म्यमभिमतं तदा त्रिक्षणवृत्तिजन्यावृत्तिजातिमद्विशेषगुणवत्त्वमिति विवक्षणेन ईश्वरेच्छाया नित्यत्वेन त्रिक्षणवृत्तित्वेऽपि जन्येच्छायास्त्रिक्षणवृत्तित्वाभावेन इच्छात्वमादाय लक्षणसमन्वय इति बोध्यम्।

एवं च द्वेषत्वमादायेति पाठः इच्छात्वमादायेति पाठश्च रम्य इति तत्त्वम्॥ २७॥

चाक्षुषलौकिकप्रत्यक्षेति। घटो वायुमानिति वाय्वंशे ज्ञानलक्षणप्रत्यासत्त्या चाक्षुषविषयवायुवृत्तिद्रव्यत्वव्याप्यवायुत्वजातिमति वायावतिव्याप्तिवारणाय लौकिकेति॥ २८॥ २९॥

स्नेहहीना गन्धयुताः क्षितावेते चतुर्दश ।
बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा ॥ ३२ ॥
धर्माधर्मौ गुणा एते ह्यात्मनः स्युश्चतुर्दश ।
संख्यादिपञ्चकं कालदिशोः शब्दश्च ते च खे ॥ ३३ ॥
संख्यादयः पञ्च बुद्धिरिच्छा यत्नोऽपि चेश्वरे ।
परापरत्वे संख्याद्याः पञ्च वेगश्च मानसे ॥ ३४ ॥

ते च खे आकाशे ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

साधर्म्यवैधर्म्य निरूप्य संप्रति प्रत्येकं पृथिव्यादिकं निरूपयति—

तत्र क्षितिर्गन्धहेतुर्नानारूपवती मता ।
षड्विधस्तु रसस्तत्र गन्धस्तु द्विविधो मतः ॥ ३५ ॥

गन्धहेतुरिति । गन्धसमवायिकारणमित्यर्थः । यद्यपि गन्धवत्त्वमात्रं लक्षणमुचितं, तथापि पृथिवीत्वजातौ प्रमाणोपन्यासाय कारणत्वमुपन्यस्तं।

---

मुक्तावलीमयूखः ।

स्पर्शादयोष्टाविति । अयमत्र संग्रहः—

"वायोर्नवैकादश तेजसो गुणा जलक्षितिप्राणभृतां चतुर्दश ।
दिक्कालयोःपञ्च षडेव चाम्बरे महेश्वरेऽष्टौ मनसस्तथैव च" ॥ इति ३०–३४

गन्धहेतुत्वस्य पृथिवीलक्षणत्वाङ्गीकारे कालादावतिव्याप्तिरत आह—गन्धसमवायिकारणमित्यर्थ इति ।

तथा च गन्धत्वावच्छिन्नसमवायसंबन्धावच्छिन्नकार्यतानिरूपितादात्म्यसंबन्धावच्छिन्नकारणतावत्त्वं पृथिव्या लक्षणं निष्पन्नम् ।

ननु सुरभ्यसुरभिकपालाभ्यामारब्धो घटो निर्गन्ध एव, न हि तत्र सुरभिगन्ध उत्पत्तुमर्हति, समवायेन सुरभिगन्धं प्रति स्वसमवायिसमवेतत्वसंबन्धेन सुरभिगन्धातिरिक्तगन्धत्वेन प्रतिबन्धकत्वात् । न वा असुरभिगन्धः, समवायेन असुरभिगन्धं प्रति स्वसमवायिसमवेतत्वसंबन्धेन असुरभिगन्धातिरिक्तगन्धत्वेन प्रतिबन्धकत्वात् । न वा चित्रगन्धस्तस्य, प्रमाणिकैरनभ्युपगमात्तत्र गन्धवत्त्वोपलम्भश्चावयवगन्धेनैवेति तादृशघटे गन्धसमवायिकारणत्वस्याभावेनाव्याप्तिरिति चेद् ?

न, स्वरूपयोग्यतारूपकारणतायास्तत्र सत्त्वेनादोषात्, पदार्थतत्त्वनिरूपणे शिरोमणिभिः तादृशघटे अव्याप्यवृत्तिगन्धोत्पत्तेरेवाभिमततया फलोपधायकतारूपकारणतायास्तत्र सत्त्वाच्च ।

न च व्याप्यवृत्त्यव्याप्यवृत्तिजातीययोर्विरोधः, मानाभावात् । उक्तप्रतिबन्ध्यप्रतिबन्धकभावश्च हेय एव, गौरवात् । एतेन चित्ररूपमपि प्रत्याख्यातं वेदितव्यम् ।

गन्धवत्त्वमात्रमिति । ननूत्पन्नं द्रव्यं क्षणमगुणं निष्क्रियं च तिष्ठतीति नियमात् उत्पत्तिकालीनघटे गन्धवत्त्वाभावादव्याप्तिरिति चेद् ?

तथा हि—पृथिवीत्वं हि गन्धसमवायिकारणतावच्छेदकतया सिद्ध्यति। अन्यथा गन्धत्वावच्छिन्नस्याकस्मिकत्वापत्तेः।

न च पाषाणादौ गन्धाभावाद्गन्धवत्त्वमव्याप्तमिति वाच्यं, तत्रापि गन्धसत्त्वात्। अनुपलब्धिस्त्वनुत्कटत्वेनाप्युपपद्यते। कथमन्यथा तद्भस्मनि गन्ध उपलभ्यते? भस्मनो हि पाषाणध्वंसजन्यत्वात्पाषाणोपादानोपादेयत्वं सिद्ध्यति। यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति व्याप्तेः। दृष्टं चैतत्खण्डपटे महापटध्वंसजन्ये। इत्थं च पाषाणपरमाणोः पृथिवीत्वात्तज्जन्यस्य पाषाणस्यापि पृथिवीत्वम्। तथा च तस्यापि गन्धवत्त्वे बाधकाभावः।

नानारूपेति। शुक्लनीलादिभेदेन नानाजातीयं रूपं पृथिव्यामेव वर्तते न तु जलादौ, तत्र शुक्लस्यैव सत्त्वात्। पृथिव्यां तु एकस्मिन्नपि

---

मुक्तावलीमयूखः।

न, गन्धवत्त्वमित्यनेन गन्धवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षणेनादोषात्। द्रव्यत्वव्याप्यजलत्वजातिमादाय जलेऽतिव्याप्तिवारणाय वृत्त्यन्तम्। सत्तामादाय जलादावतिव्याप्तिवारणाय द्रव्यत्वव्याप्येति। गन्धवत्त्वं वृत्तिमत्त्वं च समवायेन। अन्यथा कालिकेन गन्धवत्त्वस्य जलादौ सत्त्वेन तत्समवेतां, गन्धवति घटे कालिकेन वृत्तिमतीं वा जलत्वजातिमादायातिव्याप्तिस्तदवस्थैव स्यात्।

ननु 'इयं पृथिवी' इत्यनुगता प्रतीतिः घृतजतुप्रभृतिषु नास्तीति न तया पृथिवीत्वजातिसिद्धिसंभव इति पृथिवीत्वजातौ किं प्रमाणमिति चेद्?

उच्यते, समवायेन गन्धं प्रति तादात्म्येन पृथिवी कारणमिति कार्यकारणभावात् समवायसंबन्धावच्छिन्नगन्धत्वावच्छिन्नकार्यतानिरूपिता या तादात्म्यसंबन्धावच्छिन्ना पृथिवीनिष्ठा कारणता सा किंचिद्धर्मावच्छिन्ना कारणतात्वात् इत्यनुमानेन पृथिवीत्वजातिसिद्धिः

ननूक्तकार्यकारणभावे किम्मानमिति चेद्?

न, उक्तकार्यकारणभावानङ्गीकारे गन्धत्वावच्छिन्नस्याकस्मिकत्वापत्त्या जलादावपि गन्धोत्पादप्रसङ्गात्।

ननु गन्धवत्त्वस्य पृथिवीलक्षणत्वे पाषाणेऽव्याप्तिरिति चेत्।

न, पाषाणो गन्धवान्, पृथिवीत्वात् पुष्पवत् इत्यनुमानेन तत्रापि गन्धसिद्धेः।

ननु तस्य पृथिवीत्वे एव किम्मानमिति चेत्? पाषाणः पृथिवी, गन्धवद्द्रव्यारब्धत्वात् घटवत् इत्यनुमानमेव गृहाण।

ननु पाषाणावयवानां गन्धवत्त्वे किम्मानमिति चेद्?

न, पाषाणावयवा गन्धवन्तः, गन्धवद्भस्मद्रव्यारम्भकत्वात् इत्यनुमानस्यैव मानत्वात्।

ननु भस्मनः पाषाणावयवारब्धत्वे किं मानमिति चेत्? भस्म पाषाणोपादानोपादेयं। पाषाणध्वंसजन्यत्वात्, यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयं, महापटध्वंसजन्यखण्डपटवदिति ब्रूमः।

यद्द्रव्यमिति। घटध्वंसप्रत्यक्षे घटोपादानानुपादेये व्यभिचारवारणाय प्रथमं द्रव्यपदम्। अथ वा घटध्वंसजन्यरूपध्वंसे व्यभिचारवारणाय तत्। दण्डप्रागभावध्वंस-

धर्मिणि पाकवशेन नानारूपसंभवात् । न च यत्र नानारूपं नोत्पन्नं तत्रा व्याप्तिरिति वाच्यं, रूपद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य रूपनाशव द्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य वा वाच्यत्वात् । वैशषिकनये पृथिवीप रमाणौ रूपनाशस्य रूपान्तरस्य च सत्वात् । न्यायनये घटादावपि तत्स त्वाल्लक्षणसमन्वयः ।

मुक्तावलीमयूखः ।

जन्ये घटे, दण्डप्रागभावध्वंसस्य नवीनमते दण्डरूपत्वानङ्गीकारेण दण्डजन्यघटादौ व्यभि चारासंभवे तु मिथ्याज्ञानध्वंसजन्यकायव्यूहे, व्यभिचारवारणाय द्वितीयं द्रव्यपदम्। प्रतिबन्धकद्रव्यात्यन्ताभावजन्ये द्रव्ये व्यभिचारवारणाय ध्वंसपदम् ।

ननु पाषाणो गन्धवान्, पृथिवीत्वादित्यनुमानं न संभवति, निर्गन्धघटे व्यभि चारादिति चेत् ?

न, सुरभ्यसुरभिकपालाभ्यामारब्धेऽपि घटे गन्धवत्त्वस्य नव्यैरङ्गीकारेण व्यभि चाराभावात् ।

केचित्तु पाषाणः पृथिवी, गन्धवदुपादानोपादेयत्वादित्यनुमानेन पाषाणे पृथिवीत्वं साधयित्वा गन्धवत्त्वमित्यस्य गन्धवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वपरिष्कारेण पाषाणे लक्षणसमन्वयं वदन्ति ।

रूपद्वयेति । रूपद्वयवान् घटादिस्तद्वृत्तिर्द्रव्यत्वव्याप्या जातिः पृथिवीत्वं तद्वत्त्वं घटादौ इति लक्षणसमन्वयः । द्रव्यत्वव्याप्यजलत्वजातिमादाय जलेऽतिव्याप्तिवारणाय वृत्त्यन्तम् । रूपद्वयवद्वृत्तिसत्ताजातिमादाय जलादावतिव्याप्ति वारणाय द्रव्यत्वव्या प्येति । । रूपद्वयवद्वृत्तिद्रव्यत्वव्याप्यजलपृथिव्यन्यतरत्वमादाय जलेऽतिव्याप्तिवा रणाय जातीति ।

वृत्तिमत्त्वं जातिमत्त्वं च समवायेनैव विवक्षितम् । अन्यथा जलत्वं पृथिवीत्वं चा दाय जलेऽतिव्याप्तिः स्यात् ।

नन्वेवं रूपद्वयवति समवायेन जलपृथिव्यन्यतरत्वं न वर्तत इत्यत एव दोषवारण संभवे जातीति व्यर्थमिति चेत् ?

न, रूपद्वयवति समवायेन वर्तमानं जलपृथिव्युभयत्वमादायैव प्रसक्तातिव्याप्ति वारणार्थत्वात् ।

ननु रूपद्वयेति लक्षणे रूपनिष्ठं द्वित्वं न संख्यारूपं, गुणे गुणनङ्गीकारात, किन्तु अपेक्षाबुद्धिविशेषविषयत्वरूपं, तथा च अपेक्षाबुद्धीनां नानात्वेन इदं लक्षणं गुरु, इति गौरवान्नाशघटितं लघुलक्षणमाह—रूपनाशेति ।

वैशिषिकनये पृथिवीपरमाणौ पाकेन रूपनाशस्य रूपान्तरोत्पादस्य चाङ्गीकारात न्या यनये घटे पृथिपरमाणौ च तयोरभ्युपगमात् रूपनाशवान्पृथिवीपरमाणुः, तद्वृत्तिःद्रव्यत्व व्याप्या जातिः पृथिवीत्वं घटादाविति लक्षणसमन्वयः ।

जलत्वमादायातिव्याप्तिवारणाय वृत्त्यन्तम् । सत्तामादाय जलादावतिव्याप्तिवा रणाय द्रव्यत्वव्याप्येति ।

षड्विध इति। मधुरादिभेदेन यः षड्विधो रसः स पृथिव्यामेव। जले च मधुर एव रसः। अत्रापि पूर्ववद्रसद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं लक्षणार्थोऽवसेयः।

गन्धस्त्विवति। द्विविध इति वस्तुस्थितिमात्रं, न द्विविधगन्धवत्त्वं लक्षणं, द्विविधत्वस्य व्यर्थत्वात्। द्वैविध्यं च सौरभासौरभभेदेन वाच्यम् ३५

स्पर्शस्तस्यास्तु विज्ञेया ह्यनुष्णाशीतपाकजः।

तस्याः पृथिव्याः। अनुष्णाशीतस्पर्शवत्त्वं वायोरपि वर्तत इत्युक्तं पाकज इति। इत्थं च पृथिव्याः स्पर्शोऽनुष्णाशीत इति ज्ञापनार्थं तदुक्तम्। वस्तुतस्तु पाकजस्पर्शवत्त्वमात्रं लक्षणम्, अधिकस्य वैयर्थ्यात्। यद्यपि पाकजस्पर्शः पटादौ नास्ति तथापि पाकजस्पर्शवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमर्थो बोध्यः।

नित्यानित्या च सा द्वेधा नित्या स्यादणुलक्षणा ॥ ३६ ॥
अनित्या तु तदन्या स्यात्सैवावयवयोगिनी।
सा च त्रिधा भवेद्देहमिन्द्रियं विषयस्तथा ॥ ३७ ॥

सा पृथिवी त्रिविधा, नित्या अनित्या चेत्यर्थः। अणुलक्षणा परमाणुरूपा पृथिवी नित्या। तदन्या परमाणुभिन्ना पृथिवी द्व्यणुकादिरूपा सर्वाऽप्यनित्येत्यर्थः। सैव अनित्या पृथिव्येवावयववतीत्यर्थः।

ननु अवयविनि किं मानं, परमाणुपुञ्जैरेवोपपत्तेः। न च परमाणूनामतीन्द्रियत्वाद्घटादेः प्रत्यक्षं न स्यादिति वाच्यम्, एकस्य परमाणोर-

मुक्तावलीमयूखः।

वृत्तित्वं जातिमत्त्वं च समवायेन बोद्धव्यम्। तद्व्यावृत्तिश्च पूर्ववद्बोध्या इति।

ननु यत्र नाना रसा नोत्पन्नास्तत्राव्याप्तिरत आह—रसद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमिति।

रसद्वयवदाम्रफलम्, तद्वृत्तिद्रव्यत्वव्याप्यपृथिवीत्वजातिमादाय एकरसवति गुडादौ समन्वयः। व्यावृत्तिः पूर्ववत्।

अपेक्षाबुद्धिविशेषविषयत्वरूपद्वित्वघटितत्वेन गौरवानुसन्धाने अत्रापि रसनाशवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमित्येवं लक्षणं बोध्यम्। यद्यपि षड्विधस्तु रसस्तत्रेति मूलेन षड्विधरसवद्वृत्तीत्याद्येव लक्षणं प्रतीयते, तथापि द्वित्वापेक्षया षट्त्वस्य गुरुत्वात्यक्तं मुक्तावलीकृतेति विज्ञेयम्।

ननु गन्धस्य पृथिव्यामेव सत्त्वेन गन्धवत्त्वमात्रस्यैव लक्षणत्वं युक्तं न तु द्विविधगन्धवत्त्वस्येत्यत आह—द्विविध इति वस्तुस्थितिमात्रमिति ॥ ३५ ॥

पाकजस्पर्शवदिति। जलत्वमादाय जलादावतिव्याप्तिवारणाय वृत्यन्तम्। सत्तामादाय तत्रैवातिव्याप्तिवारणाय द्रव्यत्वव्याप्येति। जलपृथिव्युभयत्वमादाय तत्रैवातिव्याप्तिवारणाय जातीति। तत्रैवातिव्याप्तिवारणाय पाकजेति।

प्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वात्। यथैकस्य केशस्य दूरेऽप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वम्। न चैको घटः स्थूल इति बुद्धेरनुपपत्तिरिति वाच्यम्, एको महान्धान्यराशिरितिवदुपपत्तेः।

मैवं, परमाणोरतीन्द्रियत्वेन तत्समूहस्यापि प्रत्यक्षायोग्यत्वात्। दूरस्थकेशस्तु नातीन्द्रियः, सन्निधाने तस्यैव प्रत्यक्षत्वात्। न च तदानीमदृश्यपरमाणुपुञ्जाद् दृश्यपरमाणुपुञ्जस्योत्पन्नत्वान्न प्रत्यक्षत्वे विरोध इति वाच्यम्, अदृश्यस्य दृश्यानुपादानत्वात्। अन्यथा चक्षुरूष्मादिसंततेरपि कदाचिद् दृश्यत्वप्रसङ्गात्। न चातितप्ततैलादौ कथमदृश्यदहनसंततेर्दृश्यदहनोत्पत्तिरिति वाच्यम्, तत्र तदन्तःपातिभिर्दृश्यदहनावयवैः स्थूलदहनोत्पत्तेरुपगमात्। न चादृश्येन द्व्यणुकेन कथं दृश्यत्रसरेणोरुत्पत्तिरिति वाच्यं, यतो न दृश्यत्वमदृश्यत्वं वा कस्यचित्स्वभावादाचक्ष्महे किन्तु महत्त्वोद्भूतरूपादिकारणसमुदायवशाद् दृश्यत्वं, तदभावे चादृश्यत्वम्। तथा च त्रसरेणोर्महत्त्वात्प्रत्यक्षत्वं न तु द्व्यणुकादेस्तदभावात्। न हि त्वन्मतेऽपि सम्भवतीदं, परमाणौ महत्त्वाभावात्। इत्थं चावयविसिद्धौ तेषामुत्पादविनाशयोः प्रत्यक्षसिद्धत्वादनित्यत्वम्।

तेषां चावयवावयवधारायाः अनन्तत्वे मेरुसर्षपयोरपि साम्यप्रसङ्गः। अतः क्वचिद्विश्रामो वाच्यः। यत्र तु विश्रामस्तस्यानित्यत्वेऽसमवेतभावकार्योत्पत्तिप्रसङ्ग इति तस्य नित्यत्वम्। महत्परिमाणतारतम्यस्य गगनादौ विश्रान्तत्वमिवाणुपरिमाणतारतम्यस्यापि क्वचिद्विश्रान्तत्वमस्तीति तस्य परमाणुत्वसिद्धिः। न च त्रसरेणावेव विश्रामोऽस्त्विति वाच्यं, त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वात् घटवदित्यनुमानेन तदवयवसिद्धौ, त्रसरेणोरवयवाः सावयवाः महदारम्भकत्वात् कपालवदित्यनुमानेन तदवयवसिद्धेः। न चेदमप्रयोजकम्, अपकृष्टमहत्त्वं प्रत्यनेकद्रव्यवत्त्वस्य प्रयोजकत्वात्। न चैवं क्रमेण तदवयवधाराऽपि सिध्येदिति वाच्यम्, अनवस्थाभयेन तदसिद्धेरिति।

सा चेति। सा कार्यरूपा पृथिवी त्रिधेत्यर्थः। शरीरेन्द्रियविषयभेदादित्यर्थः॥ ३६॥ ३७॥

---

मुक्तावलीमयूखः।

ननु पृथिवीत्वजातिमत्त्वमपि पृथिवीलक्षणं सम्भवति, तत्कथं त्यक्तमिति चेद्?

न, पृथिवीत्वस्य लक्ष्यतावच्छेदकत्वेन लक्षणत्वासंभवात्।

मेरुसर्षपयोरिति। साम्यं परिमाणतारतम्याभावः, परिमाणप्रचयकारणीभूतावयवसंख्याया उभयत्र साम्यादिति भावः।

अनेकद्रव्यवत्त्वस्येति। अनेकद्रव्यसमवेतत्वं नानेकद्रव्यवत्त्वं, द्व्यणुके महत्त्वोत्पादप्रसङ्गात। किन्तु अनेकद्रव्यसमवेतसमवेतत्वमेव तत्। समन्वयश्च अनेकद्रव्यं परमाणुद्वयं, तत्समवेतं द्व्यणुकं, तत्समवेतस्त्रसरेणुरिति बोध्यम्।

द्वाभ्यां परमाणुभ्यां द्व्यणुकं, त्रिभिर्द्व्यणुकैस्त्रसरेणुर्जायते इति प्रक्रिया। त्रसरेणुपदं

तत्र देहमुदाहरति—

योनिजादि भवेद्देहमिन्द्रियं घ्राणलक्षणम् ।
विषयो द्व्यणुकादिश्च ब्रह्माण्डान्त उदाहृतः ॥ ३८ ॥

योनिजमयोनिजं चेत्यर्थः। योनिजमपि द्विविधं जरायुजमण्डजं च। जरायुजं मानुषादीनाम्। अण्डजं सर्पादीनाम्। अयोनिजं स्वेदजोद्भिज्जादिकम्। स्वेदजाः कृमिदंशाद्याः। उद्भिज्जास्तरुगुल्माद्याः। नारकिणां शरीरमप्ययोनिजम्।

न च मानुषादिशरीराणां पार्थिवत्वे किं मानमिति वाच्य, गन्धादिमत्त्वस्यैव प्रमाणत्वात्। न च क्लेदोष्मादेरुपलम्भादाप्यत्वादिकमपि स्यादिति वाच्यं, तथा सति जलत्वपृथिवीत्वादिना संकरप्रसङ्गात्। न च तर्हि जलीयत्वादिकमेवास्तु न तु पार्थिवत्वमिति वाच्यं, क्लेदादीनां विनाशेऽपि शरीरत्वेन प्रत्यभिज्ञानाद्गन्धाद्युपलब्धेश्च पृथिवीत्वसिद्धेः। तेन पार्थिवादिशरीरे जलादीनां निमित्तत्वमात्रं बोध्यम्।

शरीरत्वं तु न जातिः, पृथिवीत्वादिना साङ्कर्यात् किंतु चेष्टाश्रयत्वम्। वृक्षादीनामपि चेष्टासत्त्वान्नाव्याप्तिः। न च वृक्षादेः शरीरत्वे किं मानमिति वाच्यम्, आध्यात्मिकवायुसंबन्धस्य प्रमाणत्वात्। तत्रैव किं मानमिति चेद् ? भग्नक्षतसंरोहणादिना तदनुमानात्। यदि हस्तादौ शरीरव्यवहारो न भवति तदाऽन्त्यावयवित्वेन विशेषणीयम्। न च यत्र शरीरे चेष्टा न जाता तत्राव्याप्तिरिति वाच्यं, तादृशे प्रमाणाभावात्। अथवा चेष्टावदन्त्यावय-

---

मुक्तावलीमयूखः।

त्रिभिर्द्व्यणुकैरारब्धे द्रव्ये रूढम्। यद्वा त्रिभिस्सहितो रेणुस्त्रसरेणुरिति पृषोदरादित्वात्साधुरिति बोध्यम् ॥ ३६ ॥ ३७ ॥

जलत्वपृथिवीत्वादिना सङ्करप्रसङ्गादिति। पृथिवीत्वाभाववति तडागजले जलत्वं, जलत्वाभाववति घटे पृथिवीत्वं, मनुष्यशरीरे जलत्वपृथिवीत्वयोः समावेशात् परस्परात्यन्ताभावसमानाधिकरणधर्मयोरेकत्र समावेशरूपसङ्करदोषप्रसङ्गः स्याद् इत्यर्थः।

शरीरत्वं तु न जातिः, पृथिवीत्वादिना साङ्कर्यादिति। पृथिवीत्वाभाववति जलीयशरीरे शरीरत्वं, शरीरत्वाभाववति घटादौ पृथिवीत्वं, मनुष्यशरीरे पृथिवीत्वशरीरत्वयोः समावेशात्सङ्करः स्यादित्यर्थः।

अन्त्यावयवित्वेन विशेषणीयमिति। तथा च अन्त्यावयवित्वे सति चेष्टाश्रयत्वं शरीरत्वमिति लक्षणं निष्पन्नम्। अन्त्यावयवित्वं च द्रव्यानारम्भकद्रव्यत्वम्।

ननु घटादावपि क्रियासत्त्वात्तत्रातिव्याप्तिरेवेति चेत् ?

न, चेष्टापदेन हिताहितप्राप्तिपरिहारार्था क्रिया, न तु क्रियामात्रमित्यदोषात्।

मृतशरीरेऽव्याप्तिरत आह—अथवेति।

ननु मृतशरीरेऽपि पूर्वं चेष्टासत्त्वाल्लक्षणसमन्वयान्नाव्याप्तिरिति चेत् ?

न, यत्र मरणानन्तरं खण्डशरीरान्तरमुत्पन्नं तत्राव्याप्तिरित्याशयात्।

विवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वम्, अन्त्यावयविमात्रवृत्तिचेष्टावद्वृत्तिजातिमत्त्वं वा तत्। मानुषत्वचैत्रत्वादिजातिमादाय लक्षणसमन्वयः।

न च नृसिंहशरीरे कथं लक्षणसमन्वयः, तत्र नृसिंहत्वस्यैकव्यक्तिवृत्तितया जातित्वाभावाज्जलीयतैजसशरीरवृत्तितया देवत्वस्यापि जातित्वाभावादिति वाच्यं, कल्पभेदेन नृसिंहशरीरस्य नानात्वेन नृसिंहत्वजात्या लक्षणसमन्वयात्।

इन्द्रियमिति। घ्राणेन्द्रियं पार्थिवमित्यर्थः पार्थिवत्वं कथमिति चेत्, इत्थम्, घ्राणेन्द्रियं पार्थिवं रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात्, कुङ्कुमगन्धाभिव्यञ्जकगोघृतवत्। न च दृष्टान्ते स्वकीयरूपादिव्यञ्जकत्वादसिद्धिरिति वाच्यं, परकीयरूपाद्यव्यञ्जकत्वस्य तदर्थत्वात्। न च नवशरावगन्धव्यञ्जकजलेऽनैकान्तिकत्वमिति वाच्यं, तस्य सक्तुरसाभिव्यञ्जकत्वात्। यद्वा परकीयेति न देयं वायूपनीतसुरभिभागस्य दृष्टान्तत्वसंभवात्। न च घ्राणेन्द्रियसन्निकर्षस्य गन्धमात्रव्यञ्जकत्वात् तत्र व्यभिचार इति वाच्यं, द्रव्यत्वे सतीति विशेषणात्।

विषय इति। उपभोगसाधनं विषयः। सर्वमेव हि कार्यजातमदृष्टाधीनम्। यत्कार्यं यददृष्टाधीनं तत्तदुपभोगं साक्षात्परंपरया वा जनयत्येव। न हि बीजप्रयोजनाभ्यां विना कस्यचिदुत्पत्तिरस्ति। तेन द्व्यणुकादि ब्रह्माण्डान्तं सर्वमेव विषयो भवति। शरीरेन्द्रिययोर्विषयत्वेऽपि प्रकारान्तरोपन्यासः शिष्यबुद्धिवैशद्यार्थः ॥ ३८ ॥

---

मुक्तावलीमयूखः।

चेष्टावदिति। घटत्वमादाय घटेऽतिव्याप्तिवारणाय चेष्टावदिति। हस्तत्वमादाय हस्तेऽतिव्याप्तिवारणाय अन्त्यावयवीति।

नच हस्तत्वं न जातिः, पृथिवीत्वादिना साङ्कर्यादिति वाच्यम्, पृथिवीत्वादिव्याप्यनानाघटत्ववत् पृथिवीत्वादिव्याप्यनानाहस्तत्वाङ्गीकारेणादोषात्। सत्तामादायातिव्याप्तिवारणाय द्रव्यत्वव्याप्येति।

ननु तादृशपृथिवीत्वजातिमादाय घटादावतिप्रसङ्गो दुर्वार इत्यत आह—अन्त्यावयविमात्रवृत्तीति। अन्त्यावयविमात्रवृत्ति चेष्टावद्वृत्ति च मनुष्यत्वं चैत्रत्वं वा, तद्वति चैत्रशरीरे इति लक्षणसमन्वयः। द्रव्यत्वमादायातिव्याप्तिवारणाय प्रथमं वृत्त्यन्तम्, घटत्वमादायातिव्याप्तिवारणाय द्वितीयं वृत्त्यन्तम्।

न च नृसिंहशरीर इति। बाल्ययौवनाद्यवस्थाभेदेन चैत्रशरीरस्य नानात्वेन चैत्रत्वस्य नैकव्यक्तिवृत्तित्वं नृसिंहशरीरस्य तु नित्यत्वेन नानात्वासम्भवादेकत्वमिति अनेकव्यक्तिवृत्तित्वाभावात् नृसिंहत्वं न जातिरिति भावः।

घ्राणेन्द्रियसन्निकर्षस्येति। स्वसंयुक्तसमवायरूपस्येत्यर्थः। परकीयेति विशेषप्रक्षेप एव पूर्वलक्षणे गौरवमिति बोध्यम् ॥ ३८ ॥

जलं निरूपयति—

**वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ ।**
**स्नेहस्तत्र, द्रवत्वं तु सांसिद्धिकमुदाहृतम् ॥ ३९ ॥**

स्नेहसमवायिकारणतावच्छेदकतया जलत्वजातिः सिद्ध्यति । यद्यपि स्नेहत्वं नित्यानित्यवृत्तितया न कार्यतावच्छेदकं, तथापि जन्यस्नेहत्वं तथा बोध्यम् ।

अथ परमाणौ जलत्वं न स्यात्तत्र जन्यस्नेहाभावात्, नित्यस्य च स्वरूपयोग्यत्वे फलावश्यंभावनियमादिति चेत् ?

न, जन्यस्नेहजनकतावच्छेदकतया जन्यजलत्वजातेः सिद्धौ, तदवच्छिन्नजनकतावच्छेदकतया जलत्वजातिसिद्धेः ।

---

मुक्तावलीमयूखः ।

ननु जलत्वजातौ किम्प्रमाणम् 'इदं जलम् इदं जलम्' इति प्रतीतेः पामराणां हिमादिष्वभावादिति चेद् ?

उच्यते—समवायेन स्नेहं प्रति तादात्म्येन जलं कारणमिति कार्यकारणभावात् समवायसम्बन्धावच्छिन्नस्नेहत्वावच्छिन्नकार्यतानिरूपिता या तादात्म्यसम्बन्धावच्छिन्ना जलनिष्ठा कारणता सा किञ्चिद्धर्मावच्छिन्ना कारणतात्वात् इत्यनुमानेन स्नेहसमवायिकारणतावच्छेदकविधया जलत्वं जातिः सिद्ध्यति ।

ननु स्नेहनिष्ठकार्यतावच्छेदकत्वं स्नेहत्वस्य न संभवति, अन्यूनानतिप्रसक्तधर्मस्यैव अवच्छेदकत्वनियमेन स्नेहत्वस्य नित्यानित्यवृत्तितया कार्यताऽतिरिक्तवृत्तित्वात् । एवं च स्नेहत्वावच्छिन्नकार्यत्वाप्रसिद्धया तन्निरूपितकारणतारूपपक्षाप्रसिद्धौ नोक्तानुमानसंभव इति चेद् ?

न, स्नेहत्वस्यातिप्रसक्तत्वेऽपि जन्यस्नेहत्वस्यानतिप्रसक्ततया समवायसम्बन्धावच्छिन्नजन्यस्नेहत्वावच्छिन्नकार्यतानिरूपिता तादात्म्यसम्बन्धावच्छिन्नाजलनिष्ठा कारणता किञ्चिद्धर्मावच्छिन्ना, कारणतात्वात् इत्यनुमानेन जलत्वजातिसिद्धिसंभवात् ।

नन्वेवमपि परमाणौ जन्यस्नेहाभावेन जन्यस्नेहत्वावच्छिन्नकार्यतानिरूपितकारणतायास्तत्राभावेन जलत्वस्य कारणताऽतिरिक्तवृत्तितया न सिद्धिसंभवः, किन्तु जन्यजलत्वस्यैव ।

न च स्वरूपयोग्यतारूपकारणतायास्तत्रापि सत्त्वमिति वाच्यम्, नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभावनियमेन स्वरूपयोग्यतारूपकारणताया अपि तत्रासम्भवादिति चेद् ?

न, जन्यस्नेहत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकविधया पूर्वोक्तानुमानेन जन्यजलत्वसिद्धौ समवायसंबन्धावच्छिन्नजन्यजलत्वावच्छिन्नकार्यतानिरूपिता या तादात्म्यसंबन्धावच्छिन्ना जलनिष्ठा कारणता सा किञ्चिद्धर्मावच्छिन्ना, कारणतात्वादित्यनुमानेन जलत्वजातिसिद्धिरित्यदोषात् ।

नन्वेवमपि अन्त्यावयविनि जले जन्यजलत्वावच्छिन्नकार्यतानिरूपितकारणताया असंभवेन न तत्साधारणजलत्वजातिसिद्धिसम्भव इति चेत् ?

शुक्लरूपमेव जलस्येति दर्शयितुमुक्तं वर्णः शुक्ल इति। ननु शुक्लरूपवत्त्वं लक्षणम्। अथवा नैमित्तिकद्रवत्ववदवृत्तिरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वम्, अभास्वरशुक्लेतररूपासमानाधिकरणरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं वा तदर्थः। तेन स्फटिकादौ नातिव्याप्तिः।

रसस्पर्शाविति। जलस्य मधुर एव रसः, शीत एव स्पर्शः। तिक्तरसवदवृत्तिमधुरवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं तदर्थः। तेन शर्करादौ नातिव्याप्तिः। शीतेतरस्पर्शवदवृत्तिस्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं तदर्थः।

ननु शुक्लरूपवत्त्वमेवेति कुतः, कालिन्दीजलादौ नीलिमोपलब्धेरितिचेन्न, नीलजनकतावच्छेदिकायाः पृथिवीत्वजातेरभावाज्जले नीलरूपासंभवात्। कालिन्दीजले नीलत्वप्रतीतिरत्वाश्रयौपाधिकी। अत एव वियति विक्षेपे धवलिमोपलब्धिः। अथ जले माधुर्ये किं मानम् नहि प्रत्यक्षेण कोऽपि रसस्तत्रानुभूयते।

न च नारिकेलजलादौ माधुर्यमुपलभ्यत एवेति वाच्यं, तस्याश्रयोपा-

मुक्तावलीमयूखः।

न, सर्वस्मिन्नपि जले जलान्तरसंयोगेन बृहज्जलजननयोग्यतासत्वात् जलस्यान्त्यावयवित्वानुपगमेनादोषादिति दिक्।

न त्विति। पृथिव्यादावतिव्याप्तेरिति शेषः। शुक्लरूपवत्त्वस्य लक्षणत्वेऽपि न हानिरित्याशयेनाह—अथवेति। पृथिव्यामतिव्याप्तिवारणाय नैमित्तिकद्रवत्ववदवृत्तीति। वायावतिव्याप्तिवारणाय रूपवद्वृत्तीति। पटत्वमादायातिव्याप्तिवारणाय द्रव्यत्वसाक्षाद्व्याप्येति।

ननु कारिकास्थशुक्लरूपपदयोर्लक्षणेऽप्रवेशेन कारिकाऽनानुगुण्यमित्यस्वरसादाह—अभास्वरशुक्लेति। पृथिवीत्वमादाय पृथिव्यामतिव्याप्तिवारणायासमानाधिकरणान्तम्। जलत्वस्य शुक्लरूपसामानाधिकरण्यसंभवाद् असंभव इति रूपे शुक्लेतरत्वं विशेषणम्। तेजस्त्वमादाय तेजस्यतिव्याप्तिवारणाय अभास्वरेति। वायुत्वमादाय वायावतिव्याप्तिवारणाय रूपवद्वृत्तीति। पटत्वमादायातिव्याप्तिवारणाय साक्षादिति।

न च पटे नीलरूपस्यापि अनुभवसिद्धत्वात्पटत्वमित्ययुक्तम् इति वाच्यम्, नीलपटे नीलं रूपं नीलयुक्तद्रव्यान्तरस्यैव न तु पटस्येत्यदोषात्। द्रव्यत्वसाक्षाद्व्याप्यत्वं च द्रव्यत्वव्याप्याव्याप्यत्वं, तच्च न पटत्वस्येत्यदोषः। जलघटान्यतरत्वमादायातिव्याप्तिवारणाय जातीति।

ननु शीतस्पर्शवत्त्वस्य जललक्षणत्वे शर्करादावतिव्याप्तिरत आह—तिक्तरसेति। पृथिवीत्वमादाय पृथिव्यामतिव्याप्तिवारणाय प्रथमं वृत्त्यन्तम्। तेजस्त्वादिमादायातिव्याप्तिवारणाय द्वितीयं वृत्त्यन्तम्। शर्करात्वमादायातिव्याप्तिवारणाय साक्षादिति। जलतेजोऽन्यतरत्वमादायातिव्याप्तिवारणाय जातीति।

शीतेतरेति। द्रव्यत्वसादायातिव्याप्तिवारणाय शीतेतरस्पर्शवदवृत्तीति। आ-

धिकत्वात्। अन्यथा जम्बीररसादावम्लाद्युपलब्धेरम्लादिमत्त्वमपि स्यादिति चेत्?

न–हरीतक्यादिभक्षणस्य जलरसव्यञ्जकत्वात्। न च हरीतक्यामेव जलोष्मसंयोगाद्रसान्तरोत्पत्तिरिति वाच्यं, कल्पनागौरवात्। पृथिवीत्वस्याम्लादिजनकतावच्छेदकत्वाच्च जले नाम्लादिकम्। जम्बीररसादौ त्वाश्रयौपाधिकी तथा प्रतीतिः।

एवं जन्यशीतस्पर्शजनकतावच्छेदकं जन्यजलत्वं तदवच्छिन्नजनकतावच्छेदकं तु जलत्वं बोध्यम्। घृष्टचन्दनादौ तु शैत्योपलब्धिश्चन्दनान्तर्वर्तिशीततरसलिलस्यैव। तेजःसंयोगाज्जले उष्णप्रतीतिरौपाधिकी स्फुटैव, तत्र पाकासंभवात्।

स्नेहस्तत्रेति। घृतादावपि तदन्तर्वर्तिजलस्यैव स्नेहः, जलस्य स्नेहसमवायिकारणत्वात्। तेन जल एव स्नेह इति मन्तव्यम्।

द्रवत्वमिति। सांसिद्धिकद्रवत्वत्वं जातिविशेषः प्रत्यक्षसिद्धः। तदवच्छिन्नजनकतावच्छेदकमपि तदेवेति भावः। तैलादावपि जलस्य द्रवत्वं स्नेहप्रकर्षेण च दहनानुकूल्यमिति वक्ष्यति ॥ ३९ ॥

नित्यतादि प्रथमवत्किन्तु देहमयोनिजम्।
इन्द्रियं रसनं सिन्धुहिमादिर्विषयो मतः ॥ ४० ॥

प्रथमवदिति। पृथिव्या इवेत्यर्थः। तथा हि, जलं द्विविधं—नित्यमनित्यं च। परमाणुरूपं नित्यं, द्व्यणुकादिकं सर्वमनित्यमवयवसमवेतं च। अनित्यमपि त्रिविधं—शरीरेन्द्रियविषयभेदात्।

पृथिवीतो यो विशेषस्तमाह–किन्त्विति। देहमयोनिजम्, अयोनिजमेवेत्यर्थः। जलीयं शरीरं वरुणलोके प्रसिद्धम्।

---

मुक्तावलीमयूखः।

त्मत्वमादायातिव्याप्तिवारणाय स्पर्शवद्वृत्तीति। अस्मिँल्लक्षणे द्रव्यत्वसाक्षाद्व्याप्येति संपात्तायातम्।

एवं जन्यशीतस्पर्शेति। समवायसंबन्धावच्छिन्नजन्यशीतस्पर्शत्वावच्छिन्नकार्यतानिरूपिता या तादात्म्यसंबन्धावच्छिन्ना जन्यजलनिष्ठा कारणता सा किंचिद्धर्मावच्छिन्ना, कारणतात्वात् इत्यनुमानेन जन्यजलत्वजातिसिद्धौ, समवायसंबन्धावच्छिन्नजन्यजलत्वावच्छिन्नकार्यतानिरूपिता या तादात्म्यसंबन्धावच्छिन्ना जलनिष्ठा कारणता सा किंचिद्धर्मावच्छिन्ना कारणतात्वात् इत्यनुमानेन जलत्वं जातिः सिध्यतीति भावः।

तदेवेति। जन्यजलत्वमेवेत्यर्थः। तदवच्छिन्नजनकतावच्छेदकं जलत्वमिति भावः।

स्नेहप्रकर्षेण च दहनानुकूल्यमिति। स्नेहो द्विविधः घनीभूतः अघनीभूतश्च। तत्रादिमो दहनानुकूलः, परश्च दहनप्रतिकूल इति तत्त्वम्। एवञ्च तप्ततैलादौ घनीभूतस्य तस्य सत्त्वेन तत्र जलबिंदुप्रक्षेपे सद्य एव ज्वालाजटिलस्याग्नेरुत्पत्तिः ॥ ३९ ॥

जलीयं शरीरमिति। तच्च पार्थिवावयवैरुपष्टब्धं बोध्यम्। तेन जलमात्रे हस्त-

इन्द्रियमिति। जलीयमित्यर्थः। तथाहि, रसनं जलीयं गन्धाद्यव्यञ्जकत्वे सति रसव्यञ्जकत्वात् सक्तुरसाभिव्यञ्जकोदकवत्। रसनेन्द्रियसंनिकर्षे व्यभिचारवारणाय द्रव्यत्वं देयम्।

विषयं दर्शयति—सिन्धुहिमादिरिति। सिन्धुः समुद्रः। हिमं तुषारः। आदिपदात्सरित्कासारकरकादिः सर्वोऽपि ग्राह्यः। न च हिमकरकयोः कठिनत्वात्पार्थिवत्वमिति वाच्यम्, उष्मणा विलीनस्य तस्य जलत्वस्य प्रत्यक्षसिद्धत्वात्। यद्द्रव्यं यद्द्रव्यध्वंसजन्यमिति व्याप्तेर्जलोपादानोपादेयत्वसिद्धेः, अदृष्टविशेषेण वा द्रवत्वप्रतिरोधात्। करकादीनां काठिन्यप्रत्ययस्य भ्रान्तित्वात्॥ ४०॥

तेजो निरूपयति—

उष्णः स्पर्शस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम्।
नैमित्तिकं द्रवत्वं तु नित्यतादि च पूर्ववत्॥ ४१॥

उष्णत्वं स्पर्शनिष्ठो जातिविशेषः प्रत्यक्षसिद्धिः। इत्थं च जन्योष्णस्पर्शसमवायिकारणतावच्छेदकं तेजस्त्वं जातिविशेषः। तस्य परमाणुवृत्तित्वं तु जलत्वस्येवानुसंधेयम्।

न चोष्णस्पर्शवत्त्वं चन्द्रकिरणादावव्याप्तमिति वाच्यं, तत्राप्युष्णत्वस्य सत्त्वात्। किन्तु तदन्तः पातिजलस्पर्शेनाभिभवादग्रहः। एवं रत्नकिरणादौ पार्थिवस्पर्शेनाभिभवाच्चक्षुरादौ चानुद्भूतत्वादग्रहः।

रूपमित्यादि। वैश्वानरे मरकतकिरणादौ च पार्थिवरूपेणाभिभवाच्छुक्लरूपाग्रहः।

ननु तद्रूपाग्रहे धर्मिणोऽपि चाक्षुषत्वं न स्यादिति चेत्? न, अन्यदीयरूपेणापि धर्मिणो ग्रहसंभवात्, शङ्खस्येव पित्तपीतिम्ना। वह्नेस्तु शुक्लरूपं नाभिभूतं किन्तु तदीयं शुक्लत्वमभिभूतमित्यन्ये।

---

मुक्तावलीमयूखः।

पादादिव्यवस्थाया नानुपपत्तिः एवं तेजः शरीरेऽपि बोध्यम्। पार्थिवशरीरेऽपि पिण्डादिदर्शनाज्जलाद्युपष्टम्भोऽस्त्येवेति भावः।

उष्मणा विलीनस्य तस्येति। सप्तम्यर्थे षष्ठी। तथा च करकादिद्रव्ये नष्टे सति द्रव्यान्तरोत्पादात्तत्र द्रवत्वजलत्वयोः प्रत्यक्षम्। द्रव्यान्तरस्य च जलोपादानकत्वमेव। तदाह—यद्द्रव्यमिति। यद् द्रव्यं यद्द्रव्यध्वंसजन्यं तत् तदुपादानोपादेयम् इति व्याप्तिः। पार्थिवत्वाभावे काठिन्यप्रत्ययोपपत्तिमाह—अदृष्टेति॥ ४०॥

तेजस्त्वं जातिविशेष इति। समवायसंबन्धावच्छिन्नजन्योष्णस्पर्शत्वावच्छिन्नकार्यतानिरूपिता या तादात्म्यसंबन्धावच्छिन्ना जन्यतेजोनिष्ठा कारणता सा किंचिद्धर्मावच्छिन्ना कारणतात्वादित्यनुमानेन जन्यतेजस्त्वसिद्धौ, समवायसंबन्धावच्छिन्नजन्यतेजस्त्वावच्छिन्नकार्यतानिरूपिता या तादात्म्यसंबन्धावच्छिन्ना तेजोनिष्ठा कारणता सा

नैमित्तिकमिति। सुवर्णादिरूपे तेजसि तत्सत्त्वात्। न च नैमित्तिकद्रवत्वं न लक्षणं दहनादावव्याप्तं घृतादावतिव्याप्तं चेति वाच्यं, पृथिव्यवृत्तिनैमित्तिकद्रवत्ववद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वस्य विवक्षितत्वात्।

पूर्ववदिति। जलस्येवेत्यर्थः। तथाहि, तद् द्विविधं—नित्यमनित्यं च। नित्यं परमाणुरूपम्। तदन्यदनित्यम्, अवयवि च। तच्च त्रिधा—शरीरेन्द्रियविषयभेदात्। शरीरमयोनिजमेव। तच्च सूर्यलोकादौ प्रसिद्धम् ॥ ४१ ॥

अत्र यो विशेषस्तमाह—

इन्द्रियं नयनं, वह्निस्वर्णादिर्विषयो मतः।

ननु चक्षुषस्तैजसत्वे किं मानमिति चेत्? चक्षुस्तैजसं परकीयस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात् प्रदीपवत् प्रदीपस्य स्वीयस्पर्शव्यञ्जकत्वादत्र दृष्टान्तेऽव्याप्तिवारणाय प्रथमं परकीयेति। घटादेः स्वीयरूपव्यञ्जकत्वाद्व्यभिचारवारणाय द्वितीयं परकीयेति। अथवा प्रभाया दृष्टान्तत्वसंभवादाद्यं परकीयेति न देयम् चक्षुःसन्निकर्ष व्यभिचारवारणाय द्रव्यत्वं देयम्।

विषयं दर्शयति—वह्निरिति। ननु सुवर्णस्य तैजसत्वे किं मानमिति चेद्? न, सुवर्णं तैजसम्, असति प्रतिबन्धके अत्यन्तानलसयोगेऽप्यनुच्छिद्यमान-

---

मुक्तावलीमयूखः।

किंचिद्धर्मावच्छिन्ना कारणतात्वादित्यनुमानेन तेजस्त्वं जातिः सिध्यतीति भावः।

पृथिव्यवृत्तीति। नैमित्तिकद्रवत्ववद्वृत्तिपृथिवीत्वजातिमादाय पृथिव्यामतिव्यावारणाय पृथिव्यवृत्तीति। पृथिव्यवृत्तिजलत्वमादाय जलेऽतिव्याप्तिवारणाय नैमित्तिकद्रवत्ववद्वृत्तीति। जलतेजोऽन्यतरत्वमादायातिव्याप्तिवारणाय जातीति। अत्र द्रव्यत्वसाक्षाद्व्याप्येति संपादायातम् ॥ ४१ ॥

वस्तुतस्तु—वृत्तित्वं वृत्तिभेदेन भिन्नं सामान्याभावे प्रमाणाभाव इति मते पृथिव्यवृत्तित्वपदेन पृथिवीनिरूपितसमवायसंबन्धावच्छिन्नतत्तद्वृत्तित्वव्यक्तेरभावकूटो लक्षणे निवेशनीयः तदनिवेश्य लाघवेन पृथिवीत्वनिष्ठवृत्तित्वव्यक्तेरभावमात्रं निवेश्य द्रव्यत्वसाक्षाद्व्याप्यत्वनिवेशनैव घटत्वद्रव्यत्वादिकमादाय लक्षणातिव्याप्तिर्वारणीया एवं च पृथिवीत्वव्यक्तिभिन्नत्वेसति नैमित्तिकद्रवत्ववद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वमिति निष्कर्ष इति वदन्ति।

रामरुद्रभट्टाचार्यास्तु—नैमित्तिकद्रवत्ववद्वृत्तिद्रव्यत्वासाक्षाद्व्याप्यजातिमत्त्वमिति जातिपदस्य द्रव्यत्वसाक्षाद्व्याप्यजातिपरत्वेऽपि न निस्तारः किन्तु पृथिव्यवृत्तीतिविशेषणाचेति सूचयितुं साक्षात्पदमिति वदन्ति।

आद्यं परकीयेति न देयमिति। त्रसरेणोस्त्वाचप्रत्यक्षस्यानभ्युपगमेन स्पर्शाद्यव्यञ्जकत्वे सति रूपव्यञ्जकत्वस्य सत्वात्पार्थिवत्रसरेणौ व्यभिचारवारणाय द्वितीयपरकीयं तु देयमेवेति ध्येयम्।

ननु सुवर्णं पार्थिवं नैमित्तिकद्रवत्ववत्त्वादित्यनुमानेन सुवर्णस्य पार्थिवत्वमेवास्तु कथं तैजसत्वमिति चेद्।

जन्यद्रवत्वात् यन्नैवम् तन्नैवम् , यथा पृथिवीति । न चाप्रयोजकं, पृथिवीद्रवत्वस्य जन्यजलद्रवत्वस्य चात्यन्ताग्निसंयोगनाश्यत्वात् ।

ननु पीतिमगुरुत्वाश्रयस्य पार्थिवभागस्यापि तदानीं द्रुतत्वात्तेन व्यभिचार इति चेत् ? न, जलमध्यस्थमषीक्षोदवत्तस्याद्रुतत्वात् ।

अपरे तु पीतिमाश्रयस्य अत्यन्ताग्निसंयोगेऽपि पूर्वरूपापरावृत्तिदर्शनात्तत्प्रतिबन्धकं विजातीयद्रवद्द्रव्यं कल्प्यते । तथा हि—अत्यन्ताग्निसंयोगे पीतिमगुरुत्वाश्रयः विजातीयरूपप्रतिबन्धकद्रवद्द्रव्यसंयुक्तः, अत्यन्ताग्निसंयोगे सत्यपि पूर्वरूपविजातीयरूपानधिकरणत्वात् , जलमध्यस्थपीतपटवत् । तस्य च पृथिवीजलभिन्नस्य तेजस्त्वनियमात् ।

वायुं निरूपयति—

अपाकजोऽनुष्णाशीतस्पर्शस्तु पवने मतः ॥ ४२ ॥
तिर्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः ।
पूर्ववन्नित्यताद्युक्तं देहव्यापि त्वगिन्द्रियम् ॥ ४३ ॥

---

मुक्तावलीमयूखः ।

उच्यते सुवर्णं तैजसम् , असति प्रतिबन्धकेऽत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानद्रवत्वात् यन्नैवं तन्नैवं यथा पृथिवीत्यनुमानेन सुवर्णे तैजसत्वसिद्धिः ।

न चात्र पीतरूपवद्द्रव्यात्मकस्य सुवर्णस्य पक्षत्वे बाधः तैजससुवर्णस्य पक्षत्वे अनुमानात्पूर्वं तैजससुवर्णस्याप्रसिद्ध्या पक्षाप्रसिद्धिः, सुवर्णपदवाच्यस्य पक्षत्वे धर्मशास्त्रे पीतद्रव्येऽपि सुवर्णपदप्रयोगाद्बाधतादवस्थ्यमिति वाच्यम् । असति प्रतिबन्धकेऽत्यन्तानलसंयोगे सति अनुच्छिद्यमानद्रवत्वाधिकरणस्यैव पक्षतयाऽदोषात् ।

जलमध्यस्थघृतादौ व्यभिचारणाय असति प्रतिबन्धके इति । असति प्रतिबन्धके अनुच्छिद्यमानद्रवत्वादित्येतन्मात्रोक्तौ अग्नेरसमवधाने कथञ्चिदग्निसंयोगे वा अनुच्छिद्यमानद्रवत्वस्य घृतादौ सत्त्वेन व्यभिचारवारणाय अत्यन्तानलसंयोगेऽपीति ।

ननु उच्छिद्यमानो द्रवो यस्य स उच्छिद्यमानद्रवः न उच्छिद्यमानद्रवः अनुच्छिद्यमानद्रवः तस्य भावस्तत्त्वमिति व्युत्पत्त्या उच्छिद्यमानद्रवत्वाधिकरणभिन्नत्वमिति हेतुर्लभ्यते ततश्च गगने व्यभिचार इति चेद् ?

न, न उच्छिद्यमानो द्रवो यस्य सोऽनुच्छिद्यमानद्रवः तस्य भावस्तत्त्वमिति व्युत्पत्त्या अनुच्छिद्यमानद्रवत्वाधिकरणत्वं हेतुर्लभ्यते, तादृशहेतोश्च गगनेऽसत्त्वेन व्यभिचाराभावात् ।

नचाप्रयोजकम् "अग्नेरपत्यं प्रथमं हिरण्यम्" इति आगमस्य, पृथिवीद्रवत्वस्य जन्यजलद्रवत्वस्य च अत्यन्ताग्निसंयोगनाश्यतया सुवर्णद्रवत्वस्य चातथात्वानुभवस्य, च अनुकूलतर्कस्य सत्त्वात् ।

जलमध्यस्थेति । क्षोदश्चूर्णम् ।

पूर्वानुमाने पीतिमगुरुत्वाश्रयस्य द्रुतत्वाद्व्यभिचारमाशङ्क्य तस्याद्रुतत्वेन समाहितमिदानीं पीतिमगुरुत्वाश्रयस्य द्रुतत्वमभ्युपगम्यापि समाधत्ते अपरे तु इत्यादिना ।

अनुष्णाशीतस्पर्शस्य पृथिव्यामपि सत्त्वादुक्तमपाकज इति । अपाकजस्पर्शस्य जलादावपि सत्त्वादुक्तमनुष्णाशीत इति । तेन वायवीयो विजातीयः स्पर्शो दर्शितः । तज्जनकतावच्छेदकं वायुत्वमिति भावः । एष वायुः स्पर्शादिलिङ्गकः । वायुर्हि स्पर्शशब्दधृतिकम्पैरनुमीयते विजातीयस्पर्शेन विलक्षणशब्देन तृणादीनां धृत्या शाखादीनां कम्पेन च वायोरनुमानात् । यथा च वायोर्न प्रत्यक्षं तथाऽग्रे वक्ष्यते ।

पूर्ववदिति । वायुर्द्विविधो नित्योऽनित्यश्च । परमाणुरूपो नित्यस्तदन्योऽनित्योऽवयवसमवेतश्च । सोऽपि त्रिविधः,–शरीरेन्द्रियविषयभेदात् । तत्र शरीरमयोनिजं पिशाचादीनाम् । परंतु जलीयतैजसवायवीयशरीराणां पार्थिवभागोपष्टम्भादुपभोगक्षमत्वं जलादीनां प्राधान्याज्जलीयत्वादिकमिति ।

अत्र यो विशेषस्तमाह–देहव्यापीति । शरीरव्यापकं स्पर्शग्राहकमिन्द्रियं त्वक् । तच्च वायवीयं, रूपादिषु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वात् अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनपवनवत् ॥ ४२ ॥ ४३ ॥

---

मुक्तावलीमयूखः ।

ननु सुवर्णस्य तैजसत्वेऽन्धकारे कुतो न तद्ग्रहः सुवर्णरूपालोकसंयोगसत्त्वादिति चेद् ? न, उद्भूतानभिभूतरूपालोकसंयोगस्यैव द्रव्यप्रत्यक्षे हेतुत्वात् सुवर्णरूपस्य त्वभिभूतत्वात् ।

ननु मूले—'अपाकजोऽनुष्णाशीतस्पर्शस्तु पवने मतः' इत्युक्तं, तेन अपाकजानुष्णाशीतस्पर्शवत्त्वं वायोर्लक्षणं गम्यते तच्च पटादावतिव्याप्तमिति चेद् ? न, पाकजस्पर्शवदवृत्त्यनुष्णाशीतस्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वस्य तदर्थत्वेनादोषात् ।

तज्जनकतावच्छेदकमिति । समवायसंबन्धावच्छिन्नविजातीयस्पर्शत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्ना कारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वात् इत्यनुमानेन वायुत्वं जातिः सिध्यतीति भावः । परमाणुवृत्तित्वं तु तस्य जलत्वस्येवानुसन्धेयम् ।

ननु स्पार्शनप्रत्यक्षे स्पर्शस्य कारणतास्वीकारकारिनव्यमते वायोः प्रत्यक्षत्वेऽपि बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे उद्भूतरूपस्य कारणत्वाभ्युपगन्तृप्राचीनमते वायोरप्रत्यक्षतया तत्र किं प्रमाणमिति चेद् ? उच्यते, विजातीयस्पर्शेन विलक्षणशब्देन तृणादीनां धृत्या शाखादीनां कम्पेन च वायोरनुमानसम्भव इति । तथाहि, योऽयं रूपवद्द्रव्यासमवेतः स्पर्शः स क्वचिदाश्रितः स्पर्शत्वात् पृथिवीसमवेतस्पर्शवत् । पृथिव्यादिस्पर्शे सिद्धसाधनवारणाय रूपवद्द्रव्यासमेवत इति विशेषणम् ।

एवम् असति रूपवद्द्रव्याभिघाते योऽयं पर्णादिषु शब्दसन्तानः स स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यः अविभज्यमानावयवद्रव्यसंबन्धिशब्दसंतानत्वात् दण्डाभिहतभेरीशब्दसन्तानवत् । पृथिव्याद्यभिघातजन्ये सिद्धसाधनवारणायासतीति पक्षविशेषणम् । विभागजन्मनि शब्दे व्यभिचारवारणाय हेतावविभज्यमानेति ।

एवम् , नभसि तृणतूलस्तनयित्नुविमानादीनां धृतिः स्पर्शवद्वेगवद्द्रव्यसंयोगहेतुका अस्मदाद्यनधिष्ठितद्रव्यधृतित्वात् नौकाधृतिवत् । जलादिगततृणादौ सिद्धसाधनवारणाय नभसीति । प्रयत्नवदात्मसंयोगहेतुकधृतौ व्यभिचारवारणायास्मदादीति ।

विषयं दर्शयति—

प्राणादिस्तु महावायुपर्यन्तो विषयो मतः ।

यद्यप्यनित्यो वायुश्चतुर्विधः, तस्य चतुर्था विधा प्राणादिरित्युक्तमाकरे, तथापि संक्षेपादत्र त्रैविध्यमुक्तम् । प्राणस्त्वेक एव हृदादिनानास्थानवशान्मुखनिर्गमादिनानाक्रियावशा नानासंज्ञां लभत इति ।

आकाशं निरूपयति—

आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः ॥ ४४ ॥

आकाशकालदिशामेकैकव्यक्तित्वादिकं न जातिः । किंतु आकाशत्वं शब्दाश्रयत्वम् । वैशेषिक इति कथनं तु विशेषगुणान्तरव्यवच्छेदाय । एतेन प्रमाणमपि दर्शितम् । तथाहि, शब्दो विशेषगुणः चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातीयत्वात् स्पर्शवत् । शब्दो द्रव्यसमवेतो गुणत्वात् संयोगवत् इत्यनुमानेन शब्दस्य द्रव्यसमवेतत्वे सिद्धे शब्दो न स्पर्शवद्विशेषगुणः अग्निसंयोगासमवायिकारणकत्वाभावे सत्यकारणगुणपूर्वकप्रत्यक्षत्वात् सुखवत् । पाकजरूपादौ व्यभिचारवारणाय सत्यन्तम् । पटरूपादौ व्यभिचारवारणायाकारणगुणपूर्वकेति । जलपरमाणुरूपादौ व्यभिचारवारणाय प्रत्यक्षे-

---

मुक्तावलीमयूखः ।

एवम् , रूपवद्द्रव्याभिघातमन्तरेण तृणे कर्म स्पर्शवद्वेगवद्द्रव्याभिघातजन्यं विजातीयकर्मत्वात नदपराहतकाशादिकर्मवदिति ॥ ४२ ॥ ४३ ॥

आकरे इति । प्रशस्तपादभाष्यादावित्यर्थः ।

स्थानवशादिति ।

हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः ।
उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः ॥

इत्यभियुक्तोक्तेरिति भावः ।

आकाशं निरूपयतीति । निपूर्वकरूपयतेः प्रतिपत्त्यनुकूलव्यापारोऽर्थः तिबर्थः कृतिः। आकाशपदोत्तरद्वितीयाया विषयताऽर्थः । तथाच आकाशनिष्ठविषयतानिरूपकप्रतिपत्त्यनुकूलव्यापारानुकूलवर्तमानकालिककृतिमान् एकत्वावच्छिन्नो ग्रन्थकार इति बोधः ।

कालत्वं दिक्त्वं न जातिरित्यग्रे कथने गौरवमतो लाघवेन युगपदेव कथयति—आकाशकालेति ।

शब्दाश्रयत्वमिति । आश्रयता चात्र समवायेन । तेन कालिकसंबन्धेन शब्दस्य काले सत्त्वेऽपि न क्षतिः ।

ननु आकाशस्य शब्दो गुण इत्येव कथनेन सिद्धे वैशेषिकपदस्य वैयर्थ्यमाशङ्क्याह—वैशेषिक इतीति । शब्दो द्रव्यमिति मीमांसकमतनिरासाय गुणपदम् ।

नन्वाकाशसद्भावे किम्मानमिति चेद् ? उच्यते, शब्दः अष्टद्रव्यातिरिक्तद्रव्याश्रितः अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वादित्यनुमानेन आकाशसिद्धिरिति । नच विशेषणा-

ति। शब्दो न दिक्कालमनसां गुणः विशेषगुणत्वात्। नात्मविशेषगुणो बहिरिन्द्रियग्राह्यत्वाद्रूपवत्। इत्थं च शब्दाधिकरणं नवमं द्रव्यं गगननामकं सिध्यति।

नच वाय्ववयवेषु सूक्ष्मशब्दक्रमेण वायौ कारणगुणपूर्वकः शब्द उत्पद्यतामिति वाच्यम्, अयावद्द्रव्यभावित्वेन वायुविशेषगुणत्वाभावात् ॥ ४४ ॥

तत्र शरीरस्य विषयस्य चाभावादिन्द्रियं दर्शयति—

इन्द्रियं तु भवेच्छ्रोत्रमेकः सन्नप्युपाधितः।

नन्वाकाशं लाघवादेकं सिद्धं श्रोत्रं तु पुरुषभेदेन भिन्नं कथमाकाशं स्यादिति चेत्तत्राह—एकः सन्नपीत्यादि। आकाश एक एव सन्नपि उपाधेः कर्णशष्कुल्यादेर्भेदाद्भिन्नं श्रोत्रात्मकं भवतीत्यर्थः।

---

मुक्तावलीमयूखः।

सिद्धिरिति वाच्यम्, शब्दो न स्पर्शवद्विशेषगुणः अग्निसंयोगासमवायिकारणकत्वाभावे सति अकारणगुणपूर्वकत्वे सति प्रत्यक्षत्वात् सुखवत्। शब्दो न दिक्कालमनसां गुणः विशेषगुणत्वात् रूपवत् नात्मविशेषगुणः बहिरिन्द्रिययोग्यत्वाद्रूपवत् इत्यनुमानैरष्टद्रव्यानाश्रितत्वसिद्ध्या विशेषणासिद्ध्यभावात्।

नच विशेषगुणत्वस्य शब्देऽसिद्धत्वाद् द्वितीयानुमाने स्वरूपासिद्धिरिति वाच्यम्। शब्दो विशेषगुणः चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वात् स्पर्शवदित्यनुमानेन शब्दे विशेषगुणत्वसिद्ध्या स्वरूपासिद्धत्वाभावात्।

नच शब्दे द्रव्याश्रितत्वसिद्ध्या आकाशसाधकहेत्वोर्विशेष्यासिद्धत्वमिति वाच्यम्, शब्दो द्रव्यसमवेतः गुणत्वात् संयोगवदित्यनुमानेन द्रव्याश्रितत्वसिद्धौ विशेष्यासिद्ध्यभावात्।

ननु शब्दस्य वायुगुणत्वमेवास्त्वित्याशङ्कते—नच वाय्ववयवेष्विति ॥ ४४ ॥

जन्यानां जनक इति। एतेन कालिकसंबन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपितमधिकरणतया निमित्तत्वं काललक्षणं फलितम्। कालिकसंबन्धावच्छिन्नेति निवेशाद्दिशि, अधिकरणतयेति दानाददृष्टेश्वरयोर्नातिव्याप्तिः।

नन्वेमात्माश्रयः, कालिकपदस्य स्वरूपसंबन्धविशेषपरत्वेनादोषात्।

ननु कार्यमात्रं प्रति कालस्य निमित्तकारणत्वे किम्मानमिति चेत्? तदुपस्यधिकरणस्य तदुत्पत्तिहेतुत्वं, तदुत्पत्तिहेतोश्च तद्धेतुत्वमिति नियम एवेति गृहाण। कालस्य कार्योत्पत्त्यधिकरणत्वं तु "अद्य घटो भविष्यति" "श्वः पटो भविता" इति प्रत्ययात्।

नच तत्तत्कार्यविशेषं प्रति तत्तत्कालविशेषस्य हेतुत्वसिद्धावपि कार्यसामान्ये न कालस्य हेतुत्वसिद्धिरिति वाच्यम्, यद्विशेषयोरिति न्यायेन कार्यमात्रे कालस्य हेतुत्वसिद्धेः।

नच कार्यमात्रे कालस्य हेतुता न संभवति स्वसमवेतद्वित्वपृथक्त्वादिकं प्रति कालस्य समवायिकारणतया समवायिकारणभिन्नत्वघटितस्य निमित्तकारणत्वस्य कालेऽसत्त्वादिति वाच्यम्, कालस्य समवायसम्बन्धेन द्वित्वादिकं प्रति समवायिकारणत्वेऽपि कालिकसम्बन्धेन निमित्तत्वानपायात् समवायिकारणत्वासमवायिकारणत्वभिन्नं कारणत्वं निमित्तकारणत्वमिति लक्षणात्।

कालं निरुपयति—

जन्यानां जनकः कालो जगतामाश्रयो मतः ॥ ४५ ॥

तत्र प्रमाणं दर्शयितुमाह—जगतामिति । तथाहि 'इदानीं घट' इत्यादिप्रतीतिः सूर्यपरिस्पन्दादिकं यदा विषयीकरोति, तदा सूर्यपरिस्पन्दादिना घटादेः संबन्धो वाच्यः । स च संबन्धः संयोगादिर्न संभवतीति काल एव तत्संबन्धघटकः कल्प्यते । इत्थं च तस्याश्रयत्वमपि सम्यक् ॥ ४५ ॥

प्रमाणान्तरं दर्शयति—

परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः ।

परत्वापरत्वबुद्धेरसाधारणं निमित्तं काल एव । परत्वापरत्वयोरसमवायिकारणसंयोगाश्रयो लाघवादतिरिक्तः काल एकः कल्प्यत इति भावः ।

नन्वेकस्य कालस्य सिद्धौ क्षणदिनमासवर्षादिसमयभेदो न स्यादत आह—

मुक्तावलीमयूखः ।

ननु कालसद्भावे किम्मानमत आह—जगतामाश्रय इति । कालः सर्ववानिति प्रतीत्या जगदाश्रयत्वेन कालः सिद्ध्यतीति भावः ।

ननु इयं प्रतीतिर्दिग्विषयिण्येवास्तु अतिरिक्तकालकल्पने मानाभावादिति चेत् ? न, प्रत्ययान्तरेण कालसिद्धौ प्रकृतप्रतीतिबलेन कालस्य जगदाधारत्वं कल्प्यत इत्याशयात् । कालसाधकं प्रमाणान्तरं किमिति चेद् ? "इदानी घटः" इति प्रतीतिरेवेति गृहाण ।

नच 'इदानीं घटः' इति प्रतीतिः सूर्यपरिस्पन्दमेव विषयीकरोति न कालमिति वाच्यम्, तावताऽपि सूर्यपरिस्पन्दस्य घटादिना सम्बन्धो वाच्यः स च संयोगो न सम्भवति 'द्रव्ययोरेव संयोग' इति नियमात् । नापि समवायः अन्यनिष्ठक्रियाया अन्यत्र समवायासम्भवात् । अपि तु स्वाश्रयतपनसंयोगिसंयोग एव । एवंच स्वं सूर्यक्रिया तदाश्रयः तपनः ( सूर्यः ) तत्संयोगी कालः तत्संयोगो घटे इति सम्बन्धघटकतया कालः सिध्यतीत्याशयात् ।

नच सम्बन्धघटकसंयोगिपदेनाकाशादिकमेव गृह्यतां, तथाच नातिरिक्तकालसिद्धिरिति वाच्यम्, आकाशदिगात्मनां विनिगमनाविरहेणातिरिक्तैककालस्यैव संयोगिपदेन ग्रहणादित्यलम् ॥ ४५ ॥

परत्वापरत्वादिबुद्धेरिति । अयं भावः—कालिकपरत्वापरत्वे सासमवायिकारणके भावकार्यत्वात् घटादिवत् इत्यनुमानेन कालिकपरत्वापरत्वयोरसमवायिकारणं कालपिण्डसंयोगः सिध्यति इति तादृशसंयोगाश्रयतया कालसिद्धिरिति ।

नच पृथिवीपिण्डसंयोगस्यैव परत्वापरत्वयोरसमवायिकारणत्वं कल्प्यतां, तथा च न कालसिद्धिरिति वाच्यम्, पृथिव्यसंयुक्तपदार्थेऽपि कालिकपरत्वापरत्वयोरुत्पादेन व्यभिचारात् ।

ननु तथाप्याकाशदिगात्ममनोभिर्यः पिण्डसंयोगस्तस्यैव परत्वापरत्वयोरसमवायिकारणत्वमास्तां, किं कालकल्पनयेत्यत आह—लाघवादिति ।

क्षणादिरिति । कालस्त्वेकोऽप्युपाधिभेदात्क्षणादिव्यवहारविषयः । उपाधिस्तु स्वजन्यविभागप्रागभावावच्छिन्नं कर्म, पूर्वसंयोगावच्छिन्नविभागो वा, पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावो वा, उत्तरसंयोगावच्छिन्नं कर्म वा ।

नचोत्तरसंयोगानन्तरं क्षणव्यवहारो न स्यादिति वाच्यं, कर्मान्तरस्यापि सत्त्वादिति । महाप्रलये क्षणादिव्यवहारो यद्यस्ति तदानाद्यत्या ध्वंसेनोपपादनीय इति । दिनादिव्यवहारस्तु तत्तत्क्षणकूटैरेवेति ।

दिशं निरूपयति—

दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते ॥ ४६ ॥

दूरत्वमन्तिकत्वं च दैशिकं परत्वमपरत्वं बोध्यम् । तद्बुद्धेरसाधारणं बीजं दिगेव । दैशिकपरत्वापरत्वयोरसमवायिकारणसंयोगाश्रयतया लाघवादेका दिक् सिध्यतीति भावः ॥ ४६ ॥

---

मुक्तावलीमयूखः ।

अथंभावः विनिगमनाविरहेण लाघवादतिरिक्त एकः कालः कल्प्यते इति ।

स्वजन्येति । इदमत्राकूतम्—क्रिया, क्रियातो विभागः, विभागात्पूर्वसंयोगनाशः, तत उत्तरदेशसंयोगः, ततः क्रियानाश, इति । एवं च स्वं क्रिया तज्जन्यविभागप्रागभावविशिष्टकर्मणः उपाधित्वाङ्गीकारेण क्रियोपलक्षितकालस्य प्रथमक्षणत्वम् ।

न च क्रियायाः क्षणचतुष्टयं स्थितिसंभवात् तादृशकालस्यापि क्षणत्वापत्तिरिति वाच्यम् विभागाद्यधिकरणकालस्य क्रियाजन्यविभागप्रागभावानधिकरणत्वेनादोषात् । स्वजन्यविभागप्रागभावमात्रस्योपाधित्वाङ्गीकारे विभागप्राग्वर्तिक्षणेषु क्षणत्वापत्तिरतः क्रियेत्युक्तम् ।

पूर्वसंयोगेति । विभागमात्रस्योपाधित्वे विभागोत्तरकालेऽपि द्वितीयक्षणत्वापत्तिः । पूर्वसंयोगमात्रस्य तथात्वे च विभागपूर्वकालेऽपि द्वितीयक्षणत्वापत्तिः । उभयोपादाने तु पूर्वसंयोगविभागयोरधिकरणीभूते काले एव द्वितीयक्षणत्वव्यवहार इति ।

पूर्वसंयोगनाशेति । पूर्वसंयोगनाशमात्रस्य तृतीयक्षणोपाधित्वे पूर्वसंयोगनाशोत्तरक्षणेऽपि तृतीयक्षणत्वापत्तिः । उत्तरसंयोगप्रागभावमात्रस्य तथात्वे च पूर्वसंयोगनाशात्प्राक्कालेऽपि क्षणत्वापत्तिरत उभयमुपात्तम् ।

उत्तरसंयोगेति । उत्तरसंयोगमात्रस्योपाधित्वे उत्तरसंयोगानान्तरकालेऽपि चतुर्थक्षणत्वं स्यात् । कर्ममात्रस्य तथात्वे च क्षणचतुष्टयेऽपि चतुर्थक्षणत्वं स्यादत, उभयोपादानम् । उपाधित्वं च परिचायकत्वम् ।

अनाद्यत्येति । अजन्येत्यर्थः । ध्वंसेनैवेति । स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंसविशिष्टसमयस्यैव क्षणव्यवहारविषयत्वमिति भावः । एवं प्रलयः तद्वृत्तिध्वंसप्रतियोगिनो ये घटपटादयो यावन्तः तेषां ध्वंसविशिष्टः समयः स एवेति समन्वयः ।

दैशिकपरत्वेति । दैशिकपरत्वापरत्वे सासमवायिकारणके भावकार्यत्वात् । इत्य-

नन्वेकैव दिक् तदा प्राचीप्रतीच्यादिव्यवहारः कथमुपपद्यतामित्यत आह–

उपाधिभेदादेकापि प्राच्यादिव्यपदेशभाक् ।

यत्पुरुषस्य उदयगिरिसंनिहिता या दिक् सा तस्य प्राची । एवमुदयगिरिव्यवहिता या दिक् सा प्रतीची । एवं यत्पुरुषस्य सुमेरुसन्निहिता या दिक् सोदीची । तद्व्यवहिता त्ववाची । सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थितः ।" इति नियमात् ।

आत्मानं निरूपयति—

आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम् ॥ ४७ ॥

आत्मत्वजातिस्तु सुखदुःखादिसमवायिकारणतावच्छेदकतया सिद्धय-

---

मुक्तावलीमयूखः ।

नुमानेन दैशिकपरत्वापरत्वयोरसमवायिकारणं दिक्पिण्डसंयोगः सिध्यति तदाश्रयत्वेन च दिक् सिध्यतीति तदाशय इति भावः ॥ ४६ ॥

यत्पुरुषेति । पुरुषपदं मूर्तपरम् । तथा च यन्मूर्तापेक्षया उदयगिरिसंनिहितं यन्मूर्तं तन्मूर्तावच्छिन्ना दिक् तन्मूर्तापेक्षया प्राची । एवं यन्मूर्तापेक्षया उदयगिरिव्यवहितं यन्मूर्तं तन्मूर्तावच्छिन्ना दिक् तन्मूर्तापेक्षया प्रतीची । एवं यन्मूर्तापेक्षया सुमेरुगिरिसन्निहितं यन्मूर्तं तन्मूर्तापेक्षयोदीची । एवं यन्मूर्तापेक्षया सुमेरुगिरिव्यवहितं यन्मूर्तं तन्मूर्तावच्छिन्ना दिक् तन्मूर्तापेक्षया दक्षिणेति ।

वर्षाणां देशानाम् ।

दीधितिकारास्तु । दिक्कालौ नेश्वरादतिरिच्येते मानाभावात् तत्तत्कालोपाधिदिगुपाधिविशिष्टेश्वरादेव क्षणादिप्राच्यादिव्यवहारसंभवादित्याहुः ।

ननु स्वात्मनि स्वरूपत आत्मत्वस्य मानसप्रत्यक्षविषयत्वेऽपि अन्यात्मनोऽप्रत्यक्षत्वेन सकलात्मसाधारणानुगतप्रत्यक्षासम्भव इति अनेकसमवेतत्वघटित जातित्वग्रहेऽनेकव्यक्तिग्रहहेतुतायाः सर्वसिद्धत्वादात्मत्वस्य स्वरूपतो ग्रहेऽपि तद्गतजातित्वं न प्रत्यक्षमत आत्मत्वस्य जातित्वेऽनुमानं प्रमाणयति आत्मत्वजातिस्त्विति । समवायसंबन्धावच्छिन्नसुखत्वावच्छिन्नकार्यतानिरूपिता या तादात्म्यसंबन्धावच्छिन्नात्मनिष्ठा कारणता सा किञ्चिद्धर्मावच्छिन्ना कारणतात्वादित्यनुमानेनात्मत्वजातिसिद्धिरिति भावः ।

नन्वीश्वरे सुखानुत्पादेन सुखसमवायिकारणत्वस्य तत्राभावादीश्वरसाधारणो आत्मत्वजातिर्नसिध्येदिति चेद् न फलोपधायकतारूपकारणतायास्तत्राऽसत्त्वेपि स्वरूपयोग्यतारूपकारणतायास्सत्त्वेन तदवच्छेदकतया सिध्यन्त्या आत्मत्वजातेरीश्वरसाधारण्यात् ।

न च नित्यस्य स्वरूपयोग्यत्वे फलावश्यम्भावनियमेन ईश्वरे स्वरूपयोग्यतारूपसुखकारणतायाः सत्त्वे कदाचित्सुखोत्पादेन भवितव्यमिति कदाचिदपि सुखोत्पादाभावः स्वरूपयोग्यताख्यकारणतामपि ततो निवर्तयतीति वाच्यम् ।

जलपरमाणौ स्वरूपयोग्यतारूपकारणतायास्सत्त्वेऽपि स्नेहानुत्पादेन तादृशनियमस्याप्रयोजकत्वात् ।

ति। ईश्वरेऽपि सा जातिरस्त्येव। अदृष्टादिरूपकारणाभावान्न सुखदुःखाद्युत्पत्तिः। नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभाव इति नियमस्याप्रयोजकत्वात्।

परे त्वीश्वरे सा जातिर्नास्त्येव प्रमाणाभावात्। न च दशमद्रव्यत्वापत्तिः, ज्ञानवत्त्वेन विभजनादित्याहुः।

इन्द्रियादीति। इन्द्रियाणां शरीरस्य च परम्परया चैतन्यसंपादकः।

यद्यप्यात्मनि "अहं जाने, अहं सुखी" इत्यादिप्रत्यक्षविषयत्वमस्त्येव तथापि विप्रतिपन्नं प्रति प्रथमत एव शरीरादिभिन्नस्तत्प्रतीतिगोचर इति प्रतिपादयितुं न शक्यत इत्यतः प्रमाणान्तरं दर्शयति—करणमिति। कुठारादीनां छिदादिकरणानां कर्तारमन्तरेण फलानुपधानं दृष्टम्। एवं चक्षुरादीनां ज्ञानकरणानां फलोपधानमपि कर्तारमन्तरेण नोपपद्यत इत्यतिरिक्तः कर्ता कल्प्यते ॥ ४७ ॥

ननु शरीरस्यैव कर्तृत्वमस्त्वत आह—

शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः।
तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः ॥ ४८ ॥

ननु चैतन्यं ज्ञानादिकमेव, मुक्तात्मनां त्वन्मते इव मृतशरीराणामपि तदभावे का क्षतिः प्राणाभावेन ज्ञानाभावस्य सिद्धेरिति चेन्न शरीरस्य चैतन्ये बाल्ये विलोकितस्य स्थाविरे स्मरणानुपपत्तेः, शरीराणामवयवोपचयापचयैरुत्पादविनाशशालित्वात्।

न च पूर्वशरीरोत्पन्नसंस्कारेण द्वितीयशरीरे संस्कार उत्पद्यत इति वाच्यम्, अनन्तसंस्कारकल्पने गौरवात्।

---

मुक्तावलीमयूखः।

नन्वीश्वरे स्वरूपयोग्यतारूपकारणसत्त्वे सुखं कुतो नोत्पद्यते इति चेद्—न मिथ्याज्ञानस्यादृष्टं प्रति हेतुता मुक्तात्मन्यदृष्टोत्पत्तिवारणायाङ्गीकर्तव्येति मिथ्याज्ञानस्येश्वरेऽभावेन सुखकारणीभूतादृष्टासत्त्वेन सुखोत्पादाभावात्।

इत्याहुरिति। अत्रारुचिबीजं तु वेदस्थात्मपदस्य ज्ञानवति लक्षणापत्तिरेवेति बोध्यम्

ननु सति धर्मिणि धर्मा इतिन्यायेन आत्मसद्भावे एव किम्मानमत आह—इन्द्रियाद्यधिष्ठातेति।

परम्परयेति। जनकता सम्बन्धेनेन्द्रियाणाम् अवच्छेदकता सम्बन्धेन शरीरस्य चतन्यं (ज्ञानवत्त्वं) बोध्यम् ॥ ४७ ॥

त्वन्मत इवेति। यथा मुक्तानां ज्ञानाभावेन ज्ञानाधिकारणत्वरूपं चैतन्यं नास्ति तथा मम (चार्वाकस्य) मतेऽपि मृतशरीरस्य न चैतन्यमिति भावः।

ननु नैयायिकमते मुक्तात्मनां ज्ञानाभावे प्राणविशिष्टात्मनो विरह एव प्रयोजकः, तव चार्वाकस्य मते मृतशरीराणां ज्ञानाभावे कः प्रयोजक इत्यत आह—प्राणाभावेने-

एवं शरीरस्य चैतन्ये बालकस्य स्तन्यपाने प्रवृत्तिर्न स्यात्, इष्टसाधनताज्ञानस्य तद्धेतुत्वात्तदानीमिष्टसाधनतास्मारकाभावात्। मन्मते तु जन्मान्तरानुभूतेष्टसाधनत्वस्य तदानीं स्मरणादेव प्रवृत्तिः।

नच जन्मान्तरानुभूतमन्यदपि स्मर्यतामिति वाच्यम्, उद्बोधकाभावात्। अत्र त्वनायत्या जीवनादृष्टमेवोद्बोधकं कल्प्यते।

इत्थं च संसारस्यानादितया आत्मनोऽनादित्वसिद्धावनादिभावस्य नाशासंभवान्नित्यत्वं सिद्ध्यतीति बोध्यम्।

ननु चक्षुरादीनामेव ज्ञानादिकं प्रति करणत्वं कर्तृत्वं चास्तु, विरोधे साधकाभावादत आह—तथात्वमिति। चैतन्यमित्यर्थः। उपघाते-नाशे सति अर्थाच्चक्षुरादीनामेव।

कथमिति। पूर्वं चक्षुषा साक्षात्कृतानां चक्षुषोऽभावे स्मरणं न स्यात्, अनुभवितुरभावात्। अन्यदृष्टस्यान्येन स्मरणासंभवात्। अनुभवस्मरणयोः सामानाधिकरण्येन कार्यकारणभावादिति भावः॥ ४८॥

ननु चक्षुरादीनां चतन्यं मास्तु मनसस्तु नित्यस्य चैतन्यं स्यादत आह-

मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत्।
धर्माधर्माश्रयोऽध्यक्षो विशेषगुणयोगतः॥ ४९॥

मनोपीति। न तथा न चेतनम्। ज्ञानादीति। मनसोऽणुत्वात्प्रत्यक्षे च महत्त्वस्य हेतुत्वान्मनसि ज्ञानसुखादिसत्त्वे तत्प्रत्यक्षानुपपत्तिरित्यर्थः। यथा मनसोऽणुत्वं तथा वक्ष्यते।

नन्वस्तु विज्ञानमेवात्मा तस्य स्वप्रकाशरूपत्वाच्चेतनत्वम्, ज्ञानसुखादिकं तु तस्यवाकारविशेषः तस्यापि भावत्वादेव क्षणिकत्वं पूर्वपूर्वविज्ञनस्योत्तरोत्तरविज्ञाने हेतुत्वात् सुषुप्तावप्यालयविज्ञानधारा निराबाधैव, मृगमदवासनावासितवसन इव पूर्वपूर्वविज्ञानजनितसंस्काराणामुत्तरोत्तरविज्ञाने संक्रान्तत्वान्नानुपपत्तिः स्मरणादेरिति चेन्न—

---

मुक्तावलीमयूखः।

ति। त्वन्मतापेक्षया लाघवात् प्राणाभावस्यैव ज्ञानाभावे प्रयोजकत्वोपगमो मन्मते इति भावः॥ ४८॥

वक्ष्यते इति। "अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहेष्यते" इति ग्रन्थेनेति शेषः।

विज्ञानमेवेति। विज्ञानवादिमते वस्तुमात्रस्यैव विज्ञानरूपत्वाभ्युपगमेऽपि प्रस्तुतत्वादात्मेत्युक्तमिति। नैतावता न्यूनत्वमाशङ्कनीयम्। द्विविधं हि विज्ञानं प्रवृत्तिविज्ञानमालयविज्ञानं च 'अयं घटः' इत्यादिप्रवृत्तिविज्ञानम्। अहमित्याकारकं ज्ञानम् आलयविज्ञानम्। तदुक्तम्—

"तत्स्यादालयविज्ञानं यद्भवेदहमास्पदम्।
तत्स्यात्प्रवृत्तिविज्ञानं नीलपीतादिके भवेत्"॥ इति॥

न तस्य जगद्विषयकत्वे सर्वज्ञत्वापत्तिः । यत्किंचिद्विषयकत्वे विनिगमनाविरहः । सुषुप्तावपि विषयावभासप्रसङ्गाच्च । ज्ञानस्य सविषयत्वात् । तदानीं निराकारा चित्सन्ततिरनुवर्तत इति चेन्न, तस्याः स्वप्रकाशत्वे प्रमाणाभावात् । अन्यथा घटादीनामपि ज्ञानत्वापत्तिः ।

न चेष्टापत्तिर्विज्ञानव्यतिरिक्तवस्तुनोऽभावादिति वाच्यं, घटादेरनुभूयमानस्यापलपितुमशक्यत्वात् ।

आकारविशेष एवायं विज्ञानस्येति चेत्, किमयमाकारोऽतिरिच्यते विज्ञानात्तर्हि समायातं विज्ञानव्यतिरिक्तेन । नातिरिच्यते चेत्तर्हि समूहालम्बने नीलाकारोऽपि पीताकारः स्यात् । स्वरूपतो विज्ञानस्याविशेषात् ।

अपोहरूपो नीलत्वादिर्विज्ञानधर्म इति चेन्न, नीलत्वादीनां विरुद्धानामेकस्मिन्नसमावेशात् । इतरथा विरोधावधारणस्यैव दुरुपपादत्वात् । न वा वासनासंक्रमः संभवति, मातृपुत्रयोरपि वासनासंक्रमप्रसङ्गात् ।

न चोपादानोपादेयभावो नियामक इति वाच्यम् । वासनायाः संक्रमासंभवात् ।

---

मुक्तावलीमयूखः ।

## क्षणिकविज्ञानात्मवादिखण्डनम् ।

ननु—विज्ञानमेवात्माऽस्तु किं ज्ञानाश्रयस्यात्मनः स्वीकारेण तस्य स्वप्रकाशरूपत्वाच्चेतनत्वम् ज्ञानसुखादिकं तु विज्ञानस्यैवाकारविशेषः विज्ञानं च भावः । एवंच भावाः क्षणिकाः भावत्वात् दीपशिखावत् इत्यनुमानेन तस्य क्षणिकत्वम् तथा च क्षणिकविज्ञानमात्मेति पर्यवसन्नम् ।

नच सुषुप्तावात्मा न सिध्येत् पूर्वोत्पन्नविज्ञानस्य क्षणिकत्वेन नष्टत्वात्तदानीं पुरीतद्देशावच्छेदेन मनः संयोगस्य सत्वेन ज्ञानकारणीभूतत्वङ्मनोयोगस्य सत्वेन विज्ञानान्तरस्योत्पत्तुमशक्यत्वादिति वाच्यम्, सुषुप्तौ घटः पट इति प्रवृत्तिविज्ञानस्यासत्त्वेऽपि अहमित्याकारकालयविज्ञानस्य सत्त्वेन विज्ञानरूपात्मसिद्धेः ।

ननु विज्ञानस्यात्मत्वे तस्य क्षणिकत्वेन तदाश्रितसंस्कारस्यापि क्षणिकत्वात् कालान्तरे स्मरणं न स्यादिति चेद् ? न मृगमदेन ( कस्तूर्या ) वासिते वसने कस्तूर्या अपनयनेऽपि यथा गन्ध उपलभ्यते तथा पूर्वपूर्वविज्ञानजनितसंस्काराणां पूर्वपूर्वविज्ञाननाशेऽपि उत्तरोत्तरविज्ञाने संक्रमेण स्मरणोपपत्तेरिति चेद्, न विज्ञानस्यात्मत्वासम्भवात् । तथाहि, विज्ञानमात्मेति वदतस्तव जगद्विषयकं यत्किञ्चिद्विषयकं निर्विषयकं वा विज्ञानमात्मेत्यभिमतम् ।

नाद्यः, आत्मनां सर्वज्ञत्वापत्तेः ।

न द्वितीयः, विनिगमनाविरहेण किंविषयकं विज्ञानमात्मा किंविषयकं नेत्यनिर्णयापत्तेः सुषुप्तावपि विषयावभासप्रसङ्गाच्च ।

न तृतीयः निर्विषयकस्य ज्ञानत्वे मानाभावात् अन्यथा निर्विषयकत्वाविशेषाद्घटादी-

उत्तरस्मिन्नुत्पत्तिरेव संक्रम इति चेन्न, तदुत्पादकाभावात् । चिता-मेवोत्पादकत्वे संस्कारानन्त्यप्रसङ्गः ।

क्षणिकविज्ञानेऽतिशयविशेषः कल्प्यत इति चेन्न,

मानाभावात्कल्पनागौरवाच्च ।

एतेन क्षणिकशरीरेष्वेव चैतन्यं प्रत्युक्तं गौरवादतिशये मानाभावाच्च। बीजादावपि सहकारिसमवधानासमवधानाभ्यामेवोपपत्तेः कुर्वद्रूपत्वा-कल्पनात् ।

अस्तु तर्हि क्षणिकविज्ञाने गौरवान्नित्यविज्ञानमेवात्मा, "अविनाशी वा-ऽरेऽयमात्मा सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिश्रुतेरिति चेद् ? न तस्य सविष-

मुक्तावलीमयूखः ।

नामपि ज्ञानत्वं स्यात् । नचेष्टापत्तिस्तन्मते वस्तुमात्रस्यैव विज्ञानरूपत्वाभ्युपगमादिति वाच्यम्, विज्ञानव्यतिरिक्तत्वेनानुभूयमानस्य घटादेरपलपितुमशक्यत्वात् ।

नन्वाकारविशेष एव विज्ञानस्य घटादिरिति चेदुच्यते अकारस्य विज्ञानातिरिक्ते वस्तुमात्रस्य विज्ञानरूपत्वप्रतिज्ञाभङ्गः अनतिरिक्तत्वे नीलपीते इति समूहालम्बनस्थले नीलाकारोऽपि पीताकारः स्यात् स्वरूपतो विज्ञानस्याविशेषात् ।

न च नीलत्वादिजातेस्तैरनङ्गीकारेऽपि अपोह्यते इति अपोहः अतद्व्यावृत्तिः अर्थात् नीलेतराभावः तद्रूपं नीलत्वं स्वीक्रियते तदेव विज्ञानधर्मं इति न दोष इति वाच्यम्, स-मूहालम्बनात्मकविज्ञाने विरुद्धयोर्नीलत्वपीतत्वयोः समावेशासम्भवात् ।

नच समूहाम्बलनेन नीलत्वं न वा पीतत्वमभ्युपगम्यते अपि तु चित्रत्वमेव तथा च न दोष इतिवाच्यम्, एवमपि मात्राऽनुभूतस्य गर्भस्थेन स्मरणापत्तिभिया पूर्वविज्ञानवास-नासंक्रमस्योत्तरविज्ञाने उपपादयितुमशक्यत्वेन कालान्तरेऽनुभूतस्य कालान्तरे स्मरण-स्योपपादयितुमशक्यत्वात ।

नचोपादानोपादेयभावो वासनासंक्रमे प्रयोजक इति वाच्यम् वासनायाः संक्रमासंभवात्।

नच पूर्वविज्ञानेन उत्तरविज्ञानं वासनाविशिष्टमेवोत्पद्यते इति वाच्यम् । वासनायाः संक्रमासम्भवादिति क्षणिकविज्ञानं नात्मेति सिद्धम् ॥

ननु क्षणिकशरीरमेवात्माऽस्तु इति चेद् न गौरवात् वासनासंक्रमासम्भवेन स्मर-णानुपपत्तेश्च ।

ननु क्षेत्रस्थबीजादङ्कुरोत्पत्तिर्भवति कुसूलस्थबीजान्न भवति अतोऽङ्कुरत्वावच्छिन्नं प्रति कुर्वद्रूपत्वेन कारणता स्वीक्रिते । कुर्वद्रूपत्वं च अङ्कुरजनकतावच्छेदकतया सिद्धो जाति-विशेषः । सच फलोपधायके क्षेत्रस्थबीजे एव स्वीक्रियते न कुसूलस्थबीजे । एवं क्षणिक-विज्ञाने क्षणिकशरीरे वा कुर्वद्रूपत्वेनैव उत्तरविज्ञाने उत्तरशरीरे वा वासनोत्पादकत्वं वाच्य-मिति चेद् न, धरणिसलिलसंयोगादिरूपकारणसमवधानेऽङ्कुरोत्पादो न तदभाव इत्येव सिद्धे कुर्वद्रूपत्वेन कारणताङ्गीकारे मानाभावादित्यलम् ।

## नित्यविज्ञात्मवादिवेदान्तिमतखण्डनम् ।

ननु क्षणिकविज्ञानस्यात्मत्वे वासनासंक्रमासम्भवेन स्मरणानुपपत्तिरतो नित्यविज्ञान-

थत्वासंभवस्य दर्शितत्वात् निर्विषयस्य ज्ञानत्वे मानाभावात्सविषयत्वस्याप्यननुभवात् । अतो ज्ञानादिभिन्नो नित्य आत्मेति सिद्धम् ।

सत्यं ज्ञानमिति हि ब्रह्मपरं जीवेषु नोपयुज्यते । ज्ञानाज्ञानसुखित्वादिभिर्जीवानां भेदसिद्धौ सुतरामीश्वरभेदः । अन्यथा बन्धमोक्षव्यवस्थानुपपत्तिः । योऽपीश्वराभेदबोधको वेदः सोऽपि तदभेदेन तदीयत्वं प्रतिपादयन् स्तौति । अभेदभावनयैव यतितव्यमिति वदति । अत एव "सर्व एवात्मनि समर्पिताः" इति श्रूयते । मोक्षदशायामज्ञाननिवृत्तावभेदो जायत इत्यपि न भेदस्य नित्यत्वेन नाशायोगात् । भेदनाशेऽपि व्यक्तिद्वयं स्थास्यत्येव । न च द्वित्वमपि नश्यतीति वाच्यं, तव निर्धर्मके ब्रह्मणि सत्यत्वाभावेऽपि,सत्यस्वरूपं तदितिवद्द्वित्वाभावेऽपि व्यक्तिद्वयात्मकौ ताविति सुवचत्वात् । मिथ्यात्वाभावोऽधिकरणात्मकस्तत्र सत्यत्वमिति चेदेकत्वाभावो व्यक्तिद्वयात्मको द्वित्वमित्युच्यताम् । प्रत्येकमेकत्वेऽपि पृथ्वीजलयोर्न गन्ध इतिवदुभयं नैकमित्यस्य सर्वजनसिद्धत्वात् । योऽपि तदानीमभेदप्रतिपादको वेदः, सोऽपि निर्दुःखत्वादिना साम्यं प्रतिपादयति, संपदाधिक्ये पुरोहितोऽयं राजा संवृत्त इतिवत् अतएव 'निरञ्जनः परमंसाम्यमुपैति' इति श्रूयते। ईश्वरोपि न ज्ञानसुखात्मा किंतु ज्ञानाद्याश्रयः "नित्यं विज्ञानमानन्दं ब्रह्म" इत्यादौ विज्ञानपदेन ज्ञानाश्रय एवोक्तः, "यः सर्वज्ञः सर्ववित्" इत्यानुद्यरोधात् । आनन्दमित्यास्याप्यानन्दवदित्यर्थः । अर्शआदित्वान्मत्वर्थीयाऽच्प्रत्ययात् । अन्यथा पुँल्लिङ्गत्वापत्तिः । आनन्दोऽपि दुःखाभावे उपचर्यते, भाराद्यपगमे सुखी संवृत्तोऽहमिति वत्, दुःखाभावेन सुखित्वप्रत्यत् । अस्तु वा तस्मिन्नानन्दो न त्वसावानन्दः, "असुखम्" इति श्रुतेः । न विद्यते सुखं यस्येति कुतो नार्थ इति चेद् ? न, क्लिष्टकल्पनापत्तेः, प्रकरणविरोधादानन्दमित्यत्र मत्वर्थीयाच्प्रत्ययविरोधाच्चेति संक्षेपः ।

---

मुक्तावलीमयूखः ।

मेवात्मास्तु । न च ज्ञानस्य नित्यत्वे मानाभाव इति वाच्यम् "अविनाशी वा अरेऽयमात्मा सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुतेरेव मानत्वादिति चेद्—

न विज्ञानस्यात्मत्वासम्भवात् । तथाहि, जगद्विषयकं यत्किंचिद्विषयकं निर्विषयकं वा विज्ञानमात्मा ? नाद्यः, जीवात्मनां सर्वज्ञत्वापत्तेः । न द्वितीयः विनिगमकाभावप्रसङ्गात् । न तृतीयः निर्विषयकस्य ज्ञानत्वे मानाभावात् आत्मनां ज्ञानरूपत्वे सविषयकत्वेनानुभवापत्तेश्च तस्माज्ज्ञानादिभिन्नो नित्य आत्मेति सिद्धम् ।

नच "सत्यं ज्ञानमनन्तं ब्रह्म" "नित्यं ज्ञानमानन्दं ब्रह्म" इत्यादिश्रुतिभिर्ज्ञानरूपता आत्मन अस्थीयते इति 'वाच्यम्, 'यः सर्वज्ञः सर्ववित्' 'आनन्दं ब्रह्मणो विद्वान्' इत्यादिश्रुत्यनुरोधेन 'नित्यं विज्ञानमानन्दम्' इत्यादिश्रुतौ ज्ञानादिपदानामर्शआद्यजन्तत्वाङ्गीकारेण आत्मनो ज्ञानसुखाद्याश्रयत्वस्य सिद्धावपि ज्ञानसुखादिरूपत्वासिद्धेरित्यलम् ।

इति वेदान्तिमतखण्डनम् ।

एतेन प्रकृतिः कर्त्री पुरुषस्तु पुष्करपलाशवन्निर्लेपः किंतु चेतनः, कार्यकारणयोरभेदात् कार्यनाशे सति कार्यरूपतया तन्नाशोपि स्यादित्यकारणत्वं तस्य । बुद्धिगतचैतन्याभिमानान्यथानुपपत्त्या तत्कल्पनम् । बुद्धिश्च प्रकृतेः परिणामः । सैव महत्तत्त्वम्, अन्तः करणमित्युच्यते । तत्सत्त्वासत्त्वाभ्यां पुरुषस्य संसारापवर्गौ । तस्या एवेन्द्रियप्रणालिकया परिणतिर्ज्ञानरूपा घटादिना सम्बन्धः । पुरुषे कर्तृत्वाभिमानो बुद्धौ चैतन्याभिमानश्च भेदाग्रहात् । ममेदं कर्तव्यमिति मदंशः पुरुषोपरागो बुद्धेः स्वच्छतया तत्प्रतिबिम्बादतात्त्विको दर्पणस्येव मुखोपरागः । इदमिति विषयोपरागः, इन्द्रियप्रणालिकया परिणतिभेदस्तात्त्विको निःश्वासाभिहतदर्पणस्येव मलिनि-

मुक्तावलीमयूखः ।

एतेनेति । पूर्वोक्तयुक्त्वाऽऽत्मनो ज्ञानवत्त्वसाधनेन वक्ष्यमाणयुक्त्या चेत्यर्थः ।

## सांख्यमतखण्डनम्

ननु 'किन्तु चेतन' इत्युक्त्वा पुरुषस्य सांख्यमते ज्ञानवत्त्वाभ्युपगमात् आत्मनो ज्ञानवत्त्वसिद्धेर्न सांख्यमतप्रतिक्षेपकत्वमिति एतेनेत्यस्य पूर्वोक्तयुक्त्या ज्ञानत्वसाधनेनेत्यर्थवर्णनमयुक्तमितिचेद् ?

न चेतनस्य तन्मतेऽपि ज्ञानरूपात्वाभ्युपगमेन ज्ञानवत्त्वसिद्धेस्तन्मतप्रतिक्षेपकत्वात् । अन्यथा चेतनातिरिक्तज्ञानाभ्युपगमे तस्य—

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृति र्विकृतिः पुरुषः" ॥

इति परिगणितपञ्चविंशतितत्त्वमध्येऽप्रविष्टतया तत्त्वाधिक्यापत्तेः । प्रकृतिः १ ततो महान् २ (बुद्धिः) ततोऽहङ्कारः ३ ततः पञ्चतन्मात्राणि ( शब्द ४ स्पर्श ५ रूप ६ रस ७ गन्धाः ८) पञ्चतन्मात्रेभ्यः क्रमेण आकाश ९ वायु १० तेजो ११ जल १२ भूमयः १३ (पञ्च भूतानि) अहङ्कारादेव चक्षू १४ रसना १५ घ्राण १६ श्रोत्र १७ त्वगा १८ ख्यानि ( ज्ञानेन्द्रियाणि ) मुख १९ पाणि २० पाद २१ पायू २२ पस्था २३ ख्यानि (कर्मेन्द्रियाणि) मनः २४ (ज्ञानकर्मोभयेन्द्रियम् ) जायन्ते पुरुषः २५ इति पञ्चविंशतिः तत्त्वानि सांख्यैरभ्युपगम्यन्ते ।

ननु प्रकृतेर्गुणैः सत्त्वरजस्तमोरूपै क्रियमाणानि कर्माणि भवन्ति अहङ्कारोऽहं प्रत्ययस्तेन मूढः आत्माऽन्तः करणं यस्य स पुरुषः कर्ताहमिति मन्यते इत्यर्थकेन "प्रकृतेः क्रियमाणानि गुणैः, कर्माणि सर्वशः" अहङ्कारविमूढात्मा कर्ताहमिति मन्यते" इति भगवद्गीतावचनेन प्रकृतेरेव कर्तृत्वं प्रतीयते, पुरुषस्य किन्तु पुष्करपलाशवन्निर्लेपः सः "असङ्गो ह्ययं पुरुषः" इति श्रुत्या तस्याऽकारणत्वावगमेन "पुरुषः कर्तृत्वाभाववान् कारणत्वाभावात्" "इत्यनुमानेन च पुरुषेऽकर्तृत्वसिद्धेः ।

युक्तं चैतत् अन्यथा पुरुषस्य कारणत्वाभ्युपगमे कार्यकारणयोः सांख्यमतेऽभेदात् कार्यनाशे तन्नाशः स्यात् ।

नचैतादृशपुरुषस्यानङ्गीकार एव वरं प्रयोजनाभावादिति वाच्यम्, क्वचित्प्रसिद्धस्यैव

त्मा। कर्तव्यमिति व्यापरांशः तेनांशत्रयवती बुद्धिस्तत्परिणामेन ज्ञानेन पुरुषस्यातात्त्विकः संबन्धो दर्पणमलिनिम्नेव मुखस्योपलब्धिरुच्यते। ज्ञानवत्सुखदुःखेच्छाद्वेषधर्माधर्मा अपि बुद्धेरेव कृतिसामानाधिकरण्येन प्रतीतेः। न च बुद्धिश्चेतना परिणामित्वादिति मतमपास्तम्,

कृत्यदृष्टभोगानामिव चैतन्यस्यापि सामानाधिकरण्यप्रतीतेस्तद्भिन्ने मानाभावाच्च। चेतनोऽहं करोमिति प्रतीतिश्चैतन्यांशे भ्रम इति चेत्यकृत्यंशे किं नेष्यते। अन्यथा बुद्धेर्नित्यत्वे मोक्षाभावोऽनित्यत्वे तत्पूर्वमसंसारापत्तिः।

नन्वचेतनायाः प्रकृतेः कार्यत्वाद्बुद्धेरचेतन्यं कार्यकारणयोस्तादात्म्यादिति चेन्न, असिद्धेः। कर्तृजन्यत्वे मानाभावात्। वीतरागजन्मादर्शनादित्वम्। अनादिभावस्य नाशासंभवान्नित्यत्वम्। तत्किं प्रकृत्यादिकल्पनेन।

न च—"प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। अहंकारविमूढात्मा कर्ताहमिति मन्यते" इत्यनेन विरोध इति वाच्यम्, प्रकृतेरदृष्टस्य गुणैर-

---

मुक्तावलीमयूखः।

चैतन्यस्य बुद्धावारोपसम्भवेन बुद्धिगतचैतन्याभिमानोपपत्तये तत्कल्पनात्। बुद्धिरेव महत्तत्वमिति सांख्यैरुच्यते।

नच पुरुषस्याकर्तृत्वे तत्र धर्माधर्मयोरुत्पादासंभवेन तदधीनसुखदुःखयोरपि तत्रानुत्पादात् दुःखध्वंसरूपो मोक्षः पुरुषस्य न स्यादिति मोक्षार्थं प्रकृतिपुरुषविवेकस्यापि नापेक्षेति तदर्थं क्रियमाणं सांख्यशास्त्रमप्यनर्थकं स्यादिति वाच्यम्, बुद्धिसत्त्वे इन्द्रियद्वारा बुद्धिपरिणामेन घट इत्यादिज्ञानसंबद्धो घटादिविषयः घटाद्याकारज्ञानपरिणामिबुद्ध्या सांनिध्यरूपदोषेण अगृहीतभेदवत्त्वसंबन्धेन पुरुषनिष्ठः पुरुषस्वरूपतिरोधायकः, पुरुषस्य संसारापादकः, बुद्धिनाशे तु तत्परिणामस्य ज्ञानस्याभावेन विषयावच्छेदकाभावात् कैवल्यावस्थानरूपो मोक्षः दुःखसंबन्धतद्ध्वंसरूपौ संसारमोक्षौ बुद्धेरेव न पुंसः भेदाग्रहादेव अहं बद्धो मुक्तो वेत्यभिमन्यते इति प्रकृतिपुरुषविवेकार्थं शास्त्रस्य सार्थक्यात्। एवं च धार्मिकोहं करोमीत्यादिप्रतीत्या कृतिसमानाधिकरण्येन प्रतीयमाना धर्मादयो बुद्धेरेवेति चेन्न।

चेतनोऽहं करोमीति प्रतीत्या ज्ञानसामानाधिकरण्येन प्रतीयमानकृतेः पुरुषनिष्ठत्वौचित्येन कृतिसमानाधिकरण्येन प्रतीयमानधर्मादीनामपि पुरुषनिष्ठत्वौचित्यात्।

नचोक्तगीतावचनात् बुद्धेः कर्तृत्वसिद्धौ चेतनोहं करोमीतिप्रतीतिः चैतन्यांशे भ्रमो बुद्धेरचेतनप्रकृतिपरिणामित्वेनाचेतनत्वादिति वाच्यम् "प्रकृतेः क्रियमाणानि" इत्यस्य प्रकृतेरदृष्टस्य गुणैरदृष्टजन्यैरिच्छादिभिः कर्ताऽहमेवेत्यस्य तदर्थतया आत्मनः स्वतन्त्रकर्तृत्वनिरासे तात्पर्यात् तदुक्तं "तत्रैवं सति कर्तारमात्मानं केवलं तु यः" इत्यादिना भगवतेत्यलम्।

इति सांख्यमतखण्डनम्।

अनादित्वमिति। अयम्भावः, स्तन्यपाने बालस्य प्रवृत्तिरिष्टसाधनताज्ञानमन्तरा च नानुभवरूपं बाधादपि तु स्मरणं तच्चानुभावान्तरसापेक्षमिति पूर्वजन्मसत्त्वमिति तत्रापि प्रवृत्तिरेवमेवेति आत्मनोऽनादित्वमिति भावः।

दृष्टजन्यैरिच्छादिभिः कर्ताहमेवेत्यस्य तदर्थत्वात् । "तत्रैवं सति कर्तारमात्मानं केवलं तु यः" इत्यादि वदता भगवता प्रकटीकृतोऽयमुपरिष्टादाशय इति संक्षेपः ।

धर्माधर्माश्रय इति । आत्मेत्यनुषज्यते । शरीरस्य तदाश्रयत्वे देहान्तरकृतकर्मणां देहान्तरेण भोगानुपपत्तेः ।

विशेषगुणयोगत इति । योग्यगुणस्य ज्ञानसुखादेः सम्बन्धेनात्मनः प्रत्यक्षत्वं संभवति न त्वन्यथा अहं जाने अहं करोमीत्यादिप्रतीतेः ॥ ४९ ॥

प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः ।
अहंकारस्याश्रयोऽयं मनोमात्रस्य गोचरः ॥ ५० ॥

अयमात्मा परदेहादौ प्रवृत्त्यादिनाऽनुमीयते प्रवृत्तिरत्र चेष्टा ज्ञानेच्छायत्नादीनां देहेऽभावस्योक्तप्रायस्त्वाच्चेष्टायाश्च प्रयत्नसाध्यत्वाच्चेष्टया प्रयत्नवानात्मानुमीयत इति भावः ।

अत्र दृष्टान्तमाह—रथेति । यद्यपि रथकर्म चेष्टा न भवति, तथापि तेन कर्मणा सारथिर्यथाऽनुमीयते तथा चेष्टात्मकेन कर्मणा परात्मानुमीयते इति भावः ।

अहंकारस्येति । अहंकाराऽहमितिप्रत्ययस्तस्याश्रयो विषयः आत्मा न शरीरादिरिति भावः ।

मन इति । मनोभिन्नेन्द्रियजन्यप्रत्यक्षाविषयो मानसप्रत्यक्षविषयश्चेत्यर्थः । रूपाद्यभावेनेन्द्रियान्तरायोग्यत्वात् ॥ ५० ॥

विभुर्बुद्ध्यादिगुणवान्बुद्धिस्तु द्विविधा मता ।
अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्विधा ॥ ५१ ॥

विभुत्वं परममहत्त्ववत्त्वम् । तच्च पूर्वमुक्तमपि स्पष्टार्थमुक्तम् । बुद्ध्यादीति । बुद्धिसुखदुःखेच्छादयश्चतुर्दश गुणाः पूर्वमुक्ता वेदितव्याः । अत्रैव प्रस-

---

मुक्तावलीमयूखः ।

अनादिभावस्येति । अनादेरपि प्रागभावस्य नाशदर्शनेन भावस्येत्युक्तम् ॥४९॥

परात्मानुमीयते इति । परदेहः आत्मवान् चेष्टावत्त्वाद्रथवदित्यनुमानेन परदेहादावात्मानुमीयते इति । न च दृष्टान्तासिद्धिः इष्टानिष्टप्राप्तिपरिहारानुकूलव्यापाररूपचेष्टाया रथेऽसत्त्वादिति वाच्यम् चेष्टापदेन उत्तरसंयोगप्राप्तियोग्यक्रियाया एव विवक्षणेनादोषात् तस्याश्च रथे सत्त्वेन दृष्टान्तासिद्ध्यभावात् । नचैवमपि जले व्यभिचारः चेष्टापदेन चेतनप्रयुक्तक्रियाया एव विवक्षणेनादोषात् तस्याश्च रथे सत्त्वेन जले चासत्त्वेन दृष्टान्तासिद्धिव्यभिचारयोरभावात् "भीषाऽस्माद्वातः पवते" इति श्रुत्या जलादीनामपि चेतनाधिष्ठितत्वसत्त्वेन व्यभिचाराभावाच्चेति ॥ ५० ॥

पूर्वमुक्तमिति । 'बुद्ध्यादि षट्कं संख्यादि पञ्चकं भावना तथा । धर्माधर्मौ गुणा

ज्ञाद् बुद्धेः कतिपयं प्रपञ्चं दर्शयति । बुद्धिस्त्विति । द्वैविध्यं व्युत्पादयति। अनुभूतिरिति । अनुभूतिश्चतुर्विधेति । एतासां चतसृणां करणानि चत्वारि 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानी'ति सूत्रोक्तानि वेदितव्यानि ॥ ५१ ॥

प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे ।
घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधं मतम् ॥ ५२ ॥

इन्द्रियजन्यं ज्ञानं प्रत्यक्षम् । यद्यपि मनोरूपेन्द्रियजन्यं सर्वमेव ज्ञानं, तथापीन्द्रियत्वेन रूपेणेन्द्रियाणां यत्र ज्ञाने कारणत्वं तत्प्रत्यक्षमिति विवक्षितम् । ईश्वरप्रत्यक्षं तु न लक्ष्यम् । इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमिति सूत्रे तथैवोक्तत्वात् ।

अथवा ज्ञानाकरणकं ज्ञानं प्रत्यक्षम् । अनुमितौ व्याप्तिज्ञानस्योपमितौ सादृश्यज्ञानस्य शाब्दबोधे पदज्ञानस्य स्मृतावनुभवस्य कारणत्वात्तत्र तत्र नातिव्याप्तिः । इदं लक्षणमीश्वरप्रत्यक्षसाधारणम् । परामर्शजन्यं ज्ञानमनुमितिः । यद्यपि परामर्शप्रत्यक्षादिकं परामर्शजन्यं तथापि परामर्शजन्यं

---

मुक्तावलीमयूखः ।

एते आत्मनः स्युश्चतुर्दश:' इत्यनेन साधर्म्यप्रकरणे इति शेषः ।

अनुभूतिश्चतुर्विधेति । अयमत्र संग्रहः, प्रत्यक्षमेवेतिचार्वाकः । अनुमितिरपि इति कणादबौद्धौ । उपमितिरपीति केचित्तार्किकाः । शाब्दोऽपीति गौतमीयाः । अर्थापत्तिरपीति प्राभाकराः । अनुपलब्धिरपीति भाट्टा वेदान्तिनश्च । संभवैतिह्ये अपीति पौराणिकाः । तत्र प्रत्यक्षानुमित्युपमितिशाब्दभेदेनानुभवश्चतुर्विध इति सिद्धान्तिनः । अन्येषामन्तर्भावो मूलकृता व्यतिरेकिग्रन्थे कृतो मया च तत्रैव विवेचयिष्यते ॥ ५१ ॥

इन्द्रियत्वेन रूपेणेति । इन्द्रियत्वावच्छिन्नजनकतानिरूपितजन्यतावत्त्वे सति ज्ञानत्वं प्रत्यक्षस्य लक्षणमितिभावः। अनुमित्यादौ च नेन्द्रियत्वावच्छिन्नजनकतानिरूपिजन्यता अपितु व्याप्तिज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यतेति नातिप्रसङ्गः, ।

ननु ईश्वरप्रत्यक्षस्य नित्यतया इदं लक्षणं तत्राव्याप्तमत आह—ईश्वरप्रत्यक्षमिति

इन्द्रियार्थेति । अव्यभिचारीत्यस्य भ्रमभिन्नमित्यर्थः तथाच इन्द्रियार्थसंनिकर्षोत्पन्नं भ्रमभिन्नं ज्ञानं प्रत्यक्षं तच्च द्विविधम् अव्यपदेश्यं व्यवसायात्मकं च इति सूत्रार्थः अव्यपदेश्यमित्यस्य निर्विकल्पकं व्यवसात्मकमित्यस्य सविकल्पकमित्यर्थः ।

ईश्वरप्रत्यक्षमपि लक्ष्यमित्यभिप्रेत्याह—अथवेति । घटादावतिव्याप्तिवारणाय विशेष्यम् , अनुमित्यादावतिव्याप्तिवारणाय विशेषणम् । ननु ज्ञानाकरणकमित्यपहाय ज्ञानाजन्यमित्येवोच्यतामितिचेन्न विशिष्टज्ञानमात्रस्य विशेषणज्ञानजन्यत्वादतिव्याप्त्यापत्तेः । नच निदिध्यासनद्वारा मननादिज्ञानकरणके योगिप्रत्यक्षे इदं लक्षणमव्याप्तमितिवाच्यम् ज्ञानकरणकत्वाव्यभिचारिजातिशून्यज्ञानत्वस्यैव प्रत्यक्षत्वाभ्युपगमेनादोषात् तादृशी जातिरनुमितित्वादिरेव प्रत्यक्षत्वं ज्ञानकरणत्वव्यभिचायवेति न दोषः ।

परामर्शप्रत्यक्षेति । 'वह्निव्याप्यधूमवान् पर्वत इत्याकारकज्ञानवानहमि'ति परामर्श-

हेत्वविषयकं यज्ज्ञानं तदेवानुमितिः। न च कादाचित्कहेतुविषयकानुमितावव्याप्तिरिति वाच्यम्, तादृशज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्।

अथवा व्याप्तिज्ञानकरणकं ज्ञानमनुमितिः। एवं सादृश्यज्ञानकरणकं ज्ञानमुपमितिः। पदज्ञानकरणकं ज्ञानं शाब्दबोधः।

वस्तुतो यां कांचिदनुमितिव्यक्तिमादाय तद्व्यक्तिवृत्तिप्रत्यक्षावृत्तिजातिमत्त्वमनुमितित्वम्। एवं यत्किंचित्प्रत्यक्षादिकमादाय तद्व्यक्तिवृत्त्यनुमित्यवृत्तिजातिमत्त्वं प्रत्यक्षत्वादिकं वाच्यमिति।

जन्यप्रत्यक्षं विभजते घ्राणजादिति। घ्राणजं रासनं चाक्षुषं स्पार्शनं श्रौत्रं मानसमिति षड्विधं प्रत्यक्षम्। नचेश्वरप्रत्यक्षस्याविभजनान्न्यूनत्वम्, जन्यप्रत्यक्षस्यैव निरूपणीयत्वादुक्तसूत्रानुसारात्॥ ५२॥

घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः।
तथा रसो रसज्ञायास्तथा शब्दोऽपि च श्रुतेः॥ ५३॥

गोचर इति ग्राह्य इत्यर्थः। गन्धत्वादिरिति। आदिपदात् सुरभित्वादिपरिग्रहः। गन्धस्य प्रत्यक्षत्वात्तद्वृत्तिजातिरपि प्रत्यक्षा गन्धाश्रयग्रहणे तु घ्राणस्य न सामर्थ्यमिति बोध्यम्। तथा रस इति। रसत्वादिसहित इत्यर्थः। तथा शब्दोऽपि शब्दत्वादिसहितः। गन्धो रसश्च उद्भूतो बोध्यः॥ ५३॥

उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये।
विभागसंयोगपरापरत्वस्नेहद्रवत्वं परिमाणयुक्तम्॥ ५४॥

---

मुक्तावलीमयूखः।

प्रत्यक्षे विषयविधया परामर्शस्य कारणत्वादिति भावः। कादाचित्केति। 'धूमवान् पर्वतो वह्निमान्' इत्यनुमितौ पक्षतावच्छेदकविधया धूमस्य भानादिति भावः। तथाच परामर्शजन्यं हेत्वविषयकं यज्ज्ञानं तद्वृत्त्यनुभवत्वव्याप्यजातिमत्त्वमनुमितित्वमिति लक्षणं निष्पन्नम्। परामर्शजन्यहेत्वविषयकं ज्ञानं "पर्वतो वह्निमान्" इति तद्वृत्तिरनुभवत्वव्याप्या जातिरनुमितित्वजातिस्तद्वत्त्वं "धूमवान् पर्वतो वह्निमान्" इति हेतुविषयकानुमिताविति लक्षणसमन्वयः। घटज्ञानेऽतिव्याप्तिवारणाय जन्यान्तं परामर्शप्रत्यक्षेऽतिव्याप्तिवारणाय हेत्वविषयकमिति। परामर्शध्वंसेऽतिव्याप्तिवारणाय ज्ञानपदम्। सत्तामादाय प्रत्यक्षादावतिव्याप्तिवारणाय अनुभवत्वव्याप्येति।

ननु परामर्शजन्यमित्यस्य व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यमित्यर्थस्तथा च पक्षधर्मतानिवेशे गौरवमिति लघुलक्षणमाह—अथवेति।

नन्वनुमितिं प्रति न व्याप्तिज्ञानत्वेन कारणता अपितु ज्ञानत्वेन मनस्त्वेन वा एवमुपमितिं प्रत्यपि बोध्यम्। सामग्रीवैलक्षण्यादेव ज्ञानवैलक्षण्योपपत्तिस्तथा चासम्भव इत्यरुचेराह—वस्तुतस्त्विति॥ ५२॥

उद्भूतरूपमिति । ग्रीष्मोष्मादावनुद्भूतं रूपमिति न तत्प्रत्यक्षम् । तद्वन्ति उद्भूतरूपवन्ति ॥ ५४ ॥

क्रिया जातिर्योग्यवृत्तिः समवायश्च तादृशः ।
गृह्णाति चक्षुः संबन्धादालोकोद्भूतरूपयोः ॥ ५५ ॥

योग्येति । पृथक्त्वादिकमपि योग्यव्यक्तिवृत्तितया बोध्यम् । तादृशः योग्यव्यक्तिवृत्तिरित्यर्थः । चक्षुर्योग्यत्वमेव कथं तदाह–गृह्णातीति । आलोकसंयोग उद्भूतरूपं च चाक्षुषप्रत्यक्षे कारणम् । तत्र द्रव्यचाक्षुषं प्रति तयोः समवायसम्बन्धेन कारणत्वम् । द्रव्यसमवेतरूपादिप्रत्यक्षे स्वाश्रयसमवायसंबन्धेन । द्रव्यसमवेतसमवेतस्य रूपत्वादेः प्रत्यक्षे स्वाश्रयसमवेतसमवायसंबन्धेनेति ॥ ५५ ॥

उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः ।
रूपान्यच्चक्षुषो योग्यं रूपमत्रापि कारणम् ॥ ५६ ॥

द्रव्याध्यक्षे—

उद्भूतेति । उद्भूतस्पर्शवद्द्रव्यं त्वचो गोचरः । सोऽपि उद्भूतस्पर्शोऽपि स्पर्शत्वादिसहितः । रूपान्यदिति । रूपभिन्नं रूपत्वादिभिन्नं च यच्चक्षुषो योग्यं तत्त्वगिन्द्रियस्यापि ग्राह्यम् । तथा च पृथक्त्वसंख्यादयो ये चक्षुर्ग्राह्या गुणा उक्ताः एवं क्रियाजातयो योग्यवृत्तयश्च ते त्वचो ग्राह्या इत्यर्थः ।

अत्रापि त्वगिन्द्रियजन्यद्रव्यप्रत्यक्षेपि रूपं कारणम् । तथाच बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपं कारणम् ।

नवीनास्तु बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे न रूपं न वा स्पर्शः कारणं प्रमाणाभावात् । किंतु चाक्षुषप्रत्यक्षे रूपं स्पार्शनप्रत्यक्षे स्पर्शं कारणमन्वयव्यतिरेकात् । बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे किं कारणमिति चेत् न किंचित्, आत्मावृत्तिशब्दभिन्नविशेषगुणवत्त्वं वा प्रयोजकमस्तु । रूपस्य कारणत्वे लाघवमिति चेन्न, वायोस्त्वगिन्द्रियेणाग्रहणप्रसङ्गात् । इष्टा-

---

मुक्तावलीमयूखः ।

स्वाश्रयसमवायसम्बन्धेनेति । स्वमुद्भूतरूपमालोकसंयोगश्च तदाश्रयो द्रव्यं तत्समवायो रूपे कार्यतावच्छेदकसंबन्धश्च विषयता ।

स्वाश्रयसमवेतसमवायसंबन्धेनेति । स्वमुद्भूतरूपमालोकसंयोगश्च तदाश्रयो द्रव्यं तत्समवेतं रूपं तत्समवायो रूपत्वे इति । पिशाचादीनां प्रत्यक्षवारणाय उद्भूतरूपस्य, अन्धकारे घटादिप्रत्यक्षवारणाय आलोकसंयोगस्य कारणता चाक्षुषं प्रतीति मन्तव्यम् ।

त्वगिन्द्रियजन्यद्रव्यप्रत्यक्षेऽपि रूपमिति । अयमभिप्रायः त्वगिन्द्रियजन्यद्रव्यप्रत्यक्षे स्पर्शस्य चक्षुरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपस्य कारणत्वे गौरवमतो लाघवात् बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपस्य कारणता स्वीक्रियते । नच वायोस्त्वाचप्रत्यक्षं न स्यादिति वा-

पत्तिरिति चेदुद्भूतस्पर्श एव लाघवात्कारणमस्तु। प्रभाया अप्रत्यक्षत्वे त्विष्टापत्तिरेव किं नेष्यते। तस्मात् प्रभां पश्यामीतिवत् वायुं स्पृशामीति प्रत्ययस्य संभवाद्वायोरपि प्रत्यक्षं संभवत्येव। बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे न रूपस्य न वा स्पर्शस्य हेतुत्वम्। वायुप्रभयोरेकत्वं गृह्यत एव, क्वचिद्द्वित्वादिकमपि, क्वचित्संख्यापरिमाणाद्यग्रहो दोषादित्याहुः॥ ५६॥

त्वचो योगो मनसा ज्ञानकारणम्।

त्वङ्मनः संयोगो ज्ञानसामान्ये कारणमित्यर्थः। किं तत्र प्रमाणं, सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्तमानेन मनसा ज्ञानाजननमिति।

ननु सुषुप्तिकाले किं ज्ञानं भविष्यति अनुभवरूप स्मरणरूपं वा नाद्यः। अनुभवसामाग्र्यभावात। तथाहि प्रत्यक्षे चक्षुरादिना मनःसंयोगस्य हेतुत्वात्तदभावादेव न चाक्षुषादिप्रत्यक्षम्। ज्ञानदेरभावादेव न मानसं प्रत्यक्षम्। ज्ञानाद्यभावे चात्मनोऽपि न प्रत्यक्षमिति। एवं व्याप्तिज्ञानाभावादेव नानुमितिः। सादृश्यज्ञानाभावान्नोपमितिः। पदज्ञानाभावान्न शाब्दबोधः। इत्यनुभवसामग्र्यभावान्नानुभवः। उद्बोधकाभावाच्च न स्मरणम्। मैवम् सुषुप्तिप्राक्कालोत्पन्नेच्छादिव्यक्तेस्तत्संबन्धेनात्मनश्च प्रत्यक्षत्वप्रसङ्गात्। तदतीन्द्रियत्वे मानाभावात्। सुषुप्तिप्राक्काले निर्विकल्पकमेव नियमेन जायत इत्यत्रापि प्रमाणाभावात्।

अथ ज्ञानमात्रे त्वङ्मनः संयोगस्य यदि कारणत्वं तदा रासनचाक्षुषादिप्रत्यक्षकाले त्वाचप्रत्यक्षं स्यात्। विषयत्वक्संयोगस्य त्वङ्मनःसंयोगस्य च सत्वात्। परस्परप्रतिबन्धादेकमपि वा न स्यादिति।

अत्र केचित्—पूर्वोक्तयुक्त्या त्वङ्मनोयोगस्य ज्ञानहेतुत्वे सिद्धे चाक्षुषादिसामग्र्याः स्पार्शनादिप्रतिबन्धकत्वमनुभवानुरोधात्कल्प्यत इति।

अन्ये तु सुषुप्त्यनुरोधाच्चर्ममनः संयोगस्य ज्ञानहेतुत्वं कल्प्यते। चाक्षुषादिप्रत्यक्षकाले त्वङ्मनःसंयोगाभावान्न स्पार्शनप्रत्यक्षमिति वदन्ति।

---

मुक्तावलीमयूखः।

च्यमिष्टापत्तेः नच बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे स्पर्शस्यैव कारणताऽस्त्विति वाच्यम् प्रभायाश्चाक्षुषप्रत्यक्षानापत्तेरिति प्राचीनाः।

नव्यास्तु प्रभां पश्यामीतिवत् वायुं स्पृशामीति प्रत्ययस्यापि सद्भावात् वायुप्रभयोः प्रत्यक्षं भवत्येवेति चाक्षुषप्रत्यक्षे रूपस्य स्पार्शनप्रत्यक्षे स्पर्शस्य कारणताऽन्वयव्यतिरेकबलादास्थीयते बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे किं कारणमिति चेत् आत्मावृत्तिशब्दभिन्नविशेषगुणवत्त्वमेव कारणमिति गृहाण। न च वायोः स्पार्शनप्रत्यक्षाङ्गीकारे, तद्गतसंख्याया अपि प्रत्यक्षं स्यादिति वाच्यम् प्रभागतद्वित्वैकत्वयोरिव वायुगतद्वित्वैकत्वयोरपि प्रत्यक्षस्येष्टत्वात् क्वचित्सजातीयसंवलनरूपदोषान्न संख्यादीनां ग्रहणमित्याहुः।

स्पार्शनादिप्रतिबन्धकत्वमिति। ननु स्पार्शनसामग्र्या एव चाक्षुषादिप्रतिबन्ध-

मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः ॥ ५७ ॥

मनोग्राह्यमिति। मनोजन्यप्रत्यक्षविषय इत्यर्थः। मतिर्ज्ञानम्। कृतिः प्रयत्नः। एवं सुखत्वदुःखत्वादिकमपि मनोग्राह्यम्। एवमात्मापि मनोग्राह्यः किंतु मनोमात्रस्य गोचर इत्यनेन पूर्वमुक्तत्वादत्र नोक्तः॥ ५७॥

ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते।

महत्त्वं षड्विधे हेतुरिन्द्रियं करणं मतम्॥ ५८॥

चक्षुःसंयोगाद्यनन्तरं 'घट' इत्याकारकं घटत्वादिविशिष्टं ज्ञानं न संभवति पूर्वं विशेषणस्य घटत्वादेर्ज्ञानाभावात्। विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात्। तथा च प्रथमतो घटघटत्वयोर्वैशिष्ट्यानवगाह्येव ज्ञानं जायते। तदेव निर्विकल्पकम्। तच्च न प्रत्यक्षम्। तथाहि वैशिष्ट्यानवगाहिज्ञानस्य प्रत्यक्षं न भवति 'घटमहं जानामी'ति प्रत्ययात्। तत्रात्मनि ज्ञानं प्रकारीभूय भासते। ज्ञाने घटस्तत्र घटत्वम्। यः प्रकारः स एव विशेषणमित्युच्यते। विशेषणे यद्विशेषणं तद्विशेषणतावच्छेदकमित्युच्यते। विशेषणतावच्छेदकप्रकारकं ज्ञानं विशिष्टवैशिष्ट्यज्ञाने कारणम्। निर्विकल्पके च घटत्वादिकं न प्रकारस्तेन घटत्वादिविशिष्टघटादिवैशिष्ट्यभानं ज्ञाने न संभवति। घटत्वाद्यप्रकारकं च घटादिविशिष्टज्ञानं न संभवति। जात्यखण्डोपाध्यतिरिक्तपदार्थज्ञानस्य किंचिद्धर्मप्रकारकत्वनियमात्।

---

मुक्तावलीमयूखः।

क्त्वं कुतो न कल्प्यत इति चेन्न तथा सति सर्वत्र स्पार्शनसामग्र्याः सत्त्वेन चाक्षुषप्रत्यक्षस्योच्छेदः स्यादित्याशयात्।

मनोजन्येति। मनोमात्रजन्येत्यर्थः। अन्यथा मनोजन्यप्रत्यक्षस्य रूपादावपि सत्त्वादव्यावर्तकमिदं स्यात्।

वैशिष्ट्यानवगाह्येवेति। वैशिष्ट्यं संसर्गः सांसर्गिकविषयतानवगाह्येवेति यावत्।

घटमहं जानामीति। घटविषयकज्ञानवानहमिति बोधः।

इदमत्र तत्त्वम् निर्विकल्पकं ज्ञानं हि घटघटत्वे इत्याकारकम्।

ननु विषयता प्रकारताख्या विशेष्यताख्या संसर्गताख्या चेति त्रिविधा तत्र निर्विकल्पके त्रिविधविषयताशून्यत्वसत्त्वेन निर्विषयत्वमेव स्यादिति चेन्न तुरीयविषयताया एव तत्राभ्युपगमेनादोषादिति। निर्विकल्पकत्वं च प्रकारताशून्यत्वे सति ज्ञानत्वं, संसर्गताशून्यत्वे सति ज्ञानत्वं, विशेष्यताशून्यत्वे सति ज्ञानत्वं वा।

न च निर्विकल्पकानुव्यवसायोऽस्तु तथा च निर्विकल्पकज्ञानस्य नातीन्द्रियत्वमिति वाच्यम्। रक्तः पटो, घटो द्रव्यम्, इति समूहालम्बनानन्तरं रक्तघटज्ञानवानहमित्यनुव्यवसायवारणाय विशिष्टवैशिष्ट्यावगाहिविषयताशून्यज्ञानस्य अनुव्यवसायानङ्गीकारेण निर्विकल्पकज्ञानानुव्यवसायाभावेनादोषात्। न चैवमपि 'घटघटत्वे' इति निर्विकल्पकानन्तरं घटत्वविशिष्टघटविषयकज्ञानवानहमित्यनुव्यवसायो मास्तु घटत्ववैशिष्ट्यस्य घटे निर्विकल्प-

महत्त्वमिति। द्रव्यप्रत्यक्षे महत्त्वं समवायसंबन्धेन कारणम्। द्रव्यसमवेतानां गुणकर्मसामान्यानां प्रत्यक्षे स्वाश्रयसमवायसंबन्धेन कारणम्। द्रव्यसमवेतसमवेतानां गुणत्वकर्मत्वादीनां प्रत्यक्षे स्वाश्रयसमवेतसमवायसंबन्धेन कारणमिति।

इन्द्रियमिति। अत्रापि षड्विध इत्यनुषज्यते।

इन्द्रियत्वं तु न जातिः पृथिवीत्वादिना सांकर्यप्रसङ्गात्। किन्तु शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनः संयोगाश्रयत्वमिन्द्रियत्वम्। आत्मादिवारणाय सत्यन्तम्। उद्भूतविशेषगुणस्य शब्दस्य श्रोत्रे सत्त्वाच्छब्देतरेति। विशेषगुणस्य रूपादेश्चक्षुरादावपि सत्त्वादुद्भूतेति। उद्भूतत्वं न जातिः शुक्लत्वादिना सांकर्यात्। न च शुक्लत्वादिव्याप्यं नानैवोद्भूतत्वमिति वाच्यम्, उद्भूतरूपत्वादिनाचाक्षुषादौ जनकतानुपपत्तेः किंतु शुक्लत्वादिव्याप्यं नानैवानुद्भूतत्वं तदभावकूटश्चोद्भूतत्वम् तच्च

मुक्तावलीमयूखः।

केनाविषयीकरणात् किन्तु घटत्ववज्ज्ञानवानह—मित्यनुव्यवसायोऽस्तु जात्यखण्डोपाध्यतिरिक्तस्य यत्किंचिद्धर्मप्रकारकत्वनियमात् घटत्वस्य स्वरूपतो विषयितासंम्बन्धेन ज्ञाने प्रकारत्वसंभवादिति वाच्यम्। जातेः समवायेनैव स्वरूपतः प्रकारत्वम् न तु विषयित्वादिनापीत्यदोषात् अन्यथा कालो घटः ज्ञानं घट इति प्रतीतिः प्रमा स्यात् कालिकेन काले विषयितया च ज्ञाने स्वरूपतो घटत्वस्य प्रकारत्वात्।

महत्त्वं षड्विध इति। ननु श्रावणे महत्त्वस्य हेतुत्वे प्रयोजनाभाव इति चेन्न—द्रव्यसमवेतप्रत्यक्षत्वावच्छिन्नं प्रति महत्त्वं कारणमित्येवं कारणतास्वीकारे लाघवस्यैव प्रयोजनत्वात्। अन्यथा श्रावणान्यद्रव्यसमवेतप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वाङ्गीकारे गौरवं स्यादिति भावः।

स्वाश्रयसमवायेति। स्वं महत्त्वं तदाश्रयो द्रव्यं तत्समवायो रूपादौ कारणतावच्छेदकसम्बन्धश्च विषयता। स्वाश्रयसमवेतेति। स्वं महत्त्वं तदाश्रयो द्रव्यं तत्समवेतं रूपं तत्समवायो रूपत्वे इति।

सांकर्यादिति। पृथिवीत्वाभाववति जलीये रसनेन्द्रिये इन्द्रियत्वम् इन्द्रियत्वाभाववति घटादौ पृथिवीत्वं घ्राणेन्द्रिये पृथिवीत्वेन्द्रियत्वयोः समावेशेन सांकर्यमिति भावः।

आत्मादिवारणायेति। आत्मादौ योऽतिव्याप्तिरूपो दोषस्तद्वारणायेत्यर्थः। सत्यन्तदाने च शब्दादितरे ये विशेषगुणा ज्ञानादयस्तदाश्रयत्वस्यैवात्मनि सत्त्वान्नातिव्याप्तिरिति भावः।

ननु आत्मभिन्नत्वे सति ज्ञानकारणमनः संयोगाश्रयत्वमिन्द्रियत्वमित्येव लक्षणमस्तु इति चेन्न चर्ममनः संयोगस्य मिश्रादिमते ज्ञानकारणत्वात्तत्रातिव्याप्तिवारणाय मूलोक्तसत्यन्तस्यावश्यकत्वात्।

शुक्लत्वादिना सांकर्यादिति। उद्भूतत्वाभाववति चक्षुरिन्द्रियरूपे शुक्लत्वं शुक्लत्वाभाववति गन्धादावुद्भूतत्वं अग्न्यादिरूपे उद्भूतत्वशुक्लत्वयोः समावेशात्सांकर्यमिति भावः।

उद्भूतरूपत्वादिनेति। चाक्षुषं प्रति उद्भूतरूपत्वेन कारणता स्वीक्रियते सेदानीं

संयोगादावप्यस्ति तथा च शब्देतरोद्भूतगुणः संयोगादिश्चक्षुरादेरप्यस्त्यतो विशेषेति। कालादिवारणाय विशेष्यदलम्। इन्द्रियावयवविषयसंयोगस्यापि प्राचां मते प्रत्यक्षजनकत्वादिन्द्रियावयववारणाय, नवीनमते कालादौ रूपाभावप्रत्यक्षे संनिकर्षघटकतया कारणीभूतचक्षुःसंयोगाश्रयस्य कालादेश्च वारणाय मनः पदम्। ज्ञानकारणमित्यपि तद्वारणाय।

करणमिति। असाधारणं कारणं करणम्। असाधारणत्वं व्यापारवत्त्वम्॥ ५८॥

विषयेन्द्रियसबन्धो व्यापारः सोऽपि षड्विधः।
द्रव्यग्रहस्तु संयोगात्संयुक्तसमवायतः॥ ५९॥
द्रव्येषु समवेतानां तथा तत्समवायतः।
तत्रापि समवेतानां शब्दस्य समवायतः॥ ६०॥
तद्वृत्तीनां समवेतसमवायेन तु ग्रहः।
प्रत्यक्षं समवायस्य विशेषणतया भवेत्॥ ६१॥
विशेषणतया तद्वदभावानां ग्रहो भवेत्।
यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते॥ ६२॥

विषयेन्द्रियेति। व्यापारः संनिकर्षः। षड्विधं संनिकर्षमुदाहरणद्वारा प्रदर्शयति। द्रव्यग्रह इति। द्रव्यप्रत्यक्षमिन्द्रियसंयोगजन्यम्। द्रव्यसमवेतप्रत्यक्षमिन्द्रियसंयुक्तसमवायजन्यम्। एवमग्रेऽपि।

वस्तुतस्तु द्रव्यचाक्षुषं प्रति चक्षुः संयोगः कारणम्। द्रव्यसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवायः कारणम्। द्रव्यसमवेतसमवेतचाक्षुषं प्रति चक्षुः संयुक्तसमवेतसमवायः कारणम्। एवमन्यत्रापि विशिष्यैव कार्यकारणभावः।

---

मुक्तावलीमयूखः।

न सिद्ध्यति शुक्लत्वादिव्याप्योद्भूतत्वविशिष्टरूपत्वस्य पीतत्वव्याप्योद्भूतत्वविशिष्टरूपत्व-
स्य चान्यतया सप्तविधरूपसाधारणोद्भूतत्वस्याभावेनैकरूपेण कारणत्वासम्भवादिति भावः।

शुक्लत्वादिव्याप्यं नानेति। यथा पृथिवीत्वादिना घटत्वस्य सांकर्यमाशङ्क्य घटत्वं
नाना तद्वच्छुक्लत्वादिव्याप्यमुद्भूतत्वमपि नानेत्यभिप्रायः तथा हि पृथिवीत्वाभाववति तै-
जस (स्वर्ण) घटे घटत्वं घटत्वाभाववति मृत्पिण्डादौ पृथिवीत्वं मृद्घटे पृथिवीत्वघटत्वयोः
समावेशात्सांकर्यं स्यादतः पृथिवीत्वव्याप्यं घटत्वमन्यत् तेजस्त्वव्याप्यं घटत्वमन्यदिति।

ननु तज्जन्यत्वे सति तज्जन्यजनकत्वरूपस्य व्यापारत्वस्य श्रोत्रशब्दसम्बन्धे समवायेऽ-
सम्भवः समवायस्याजन्यत्वादित्यत आह—व्यापारः सन्निकर्ष इति।

ननु द्रव्यप्रत्यक्षे इन्द्रियसम्बन्धत्वेन हेतुत्वे त्वक्प्रभासंयोगाच्चाक्षुषापत्तिः अन्धकारे
घटचक्षुस्संयोगात्त्वाचप्रत्यक्षापत्तिश्चेत्यरुचेराह—वस्तुतस्त्विति।

परंतु पृथिवीपरमाणुनीले नीलत्वं पृथ्वीपरमाणौ पृथिवीत्वं च चक्षुषा कथं न गृह्यते तत्र परंपरयोद्भूतरूपसंवन्धस्य महत्त्वसम्बन्धस्य च सत्वात्। तथाहि—नीले नीलत्वं जातिरेकैव घटनीले परमाणुनीले च वर्तते। तथाच महत्त्वसम्बन्धो घटनीलमादाय वर्तते। उद्भूतरूपसम्बन्धस्तूभयमादायैव वर्तते। एवं पृथिवीत्वेऽपि घटादिकमादाय महत्त्वसम्बन्धो वोध्यः।

एवं वायौ तदीयस्पर्शादौ च सत्तायाश्चाक्षुषप्रत्यक्षं स्यात्।

तस्मादुद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नचक्षुःसंयुक्तसमवायस्य द्रव्यसमवेतचाक्षुषप्रत्यक्षे, तादृशचक्षुःसंयुक्तसमवेतसमवायस्य द्रव्यसमवेतचाक्षुषे कारणत्वं वाच्यम्। इत्थं च परमाणुनीलादौ न नीलत्वादिग्रहः, परमाणौ-चक्षुःसंयोगस्य महत्वावच्छिन्नत्वाभावात्। एवं वाय्वादौ न सत्तादिचाक्षुषं तत्र चक्षुःसंयोगस्य रूपावच्छिन्नत्वाभावात्।

एवं यत्र घटस्य मध्यावच्छेदेनालोकसंयोगः चक्षुः संयोगस्तु बाह्यावच्छेदेन तत्र घटप्रत्यक्षाभावादालोकसयोगावच्छिन्नत्वं चक्षुःसंयोगे विशेषणं देयम्।

एवं द्रव्यस्पार्शनप्रत्यक्षे त्वक्संयोगः कारणम्। द्रव्यसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवायः, कारणंम्। द्रव्यसमवेतसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायः कारणम्।

अत्रापि महत्त्वावच्छिन्नत्वमुद्भूतस्पर्शावच्छिन्नत्वं च पूर्ववदेव वोध्यम्।

एवं गन्धप्रत्यक्षे घ्राणसंयुक्तसमवायः। गन्धसमवेतस्य घ्राणजन्यप्रत्यक्षे घ्राणसंयुक्तसमवेतसमवायः कारणम्।

एवं रसप्रत्यक्षे रसनासयुक्तसमवायः। रससमवेतरासनप्रत्यक्षे रसनासंयुक्तसमवेतसमवायः कारणम्।

शब्दप्रत्यक्षे श्रोत्रावच्छिन्नसमवायः कारणम्। शब्दसमवेतश्रावणप्रत्यक्षे श्रोत्रावच्छिन्नसमवेतसमवायः कारणम्।

---

मुक्तावलीमयूखः।

परम्परयेति। स्वाश्रयसमवेतसमवेतत्वसम्बन्धेनेत्यर्थः। स्वमुद्भूतरूपं तदाश्रयो घटः तत्समवेतं नीलरूपं तत्समवायो नीलत्वे। एवं स्वमुद्भूतरूपं तदाश्रयः कपालं तत्समवेतो घटः तत्समवायः पृथिवीत्वे। एवं स्वं महत्त्वं तदाश्रयो घटस्तत्समवेतं नीलरूपं तत्समवायो नीलत्वे।

उद्भूतरूपावच्छिन्नेति। इदं महत्त्वावच्छिन्नेति च चक्षुःसंयोगे विशेषणम्। अर्थात् यत्र चक्षुःसंयोगः, समवायेन वर्तते तत्रैव महत्त्वोद्भूतरूपयोरपि समवायेन स्थितिरपेक्ष्यत इति तथा च परमाणौ चक्षुःसंयोगस्तत्रोद्भूतरूपसत्त्वेऽपि महत्त्वाभावात् वायौ महत्त्वसत्त्वेऽपि उद्भूतरूपाभावान्न परमाण्वादौ पृथिवीत्वादिकं न वा वा वायौ सत्तायाश्चाक्षुषं प्रत्यक्षमिति।

गन्धसमवेतस्येति। गन्धत्वादेरित्यर्थः। घ्राणेति। घ्राणसंयुक्तो घटादिस्तत्समवेतो गन्धस्तत्समवायो गन्धत्वे इति।

अत्र सर्वं प्रत्यक्षं लौकिकं बोध्यम् । वक्ष्यमाणमलौकिकप्रत्यक्षमिन्द्रियसंयोगादिकं विनापि भवति ।

एवात्मनः प्रत्यक्ष मनःसंयोगः, आत्मसमवेतमानसप्रत्यक्षे मनः संयुक्तसमवायः, आत्मसमवेतसमवेतमानसप्रत्यक्षे मनः संयुक्तसमवेतसमवायः कारणम्।

अभावप्रत्यक्षे समवायप्रत्यक्षे चेन्द्रियसंबद्धविशेषणता हेतुः । वैशेषिकमते तु समवायो न प्रत्यक्षः ।

अत्र यद्यपि विशेषणता नानाविधा । तथाहि भूतलादौ घटाद्यभावः स्वसंयुक्तविशेषणतया गृह्यते । संख्यादौ रूपाद्यभावः स्वसंयुक्तसमवेतविशेषणतया । संख्यात्वादौ रूपाद्यभावः स्वसंयुक्तसमवेतसमवेतविशेषणतया । शब्दाभावः केवलश्रोत्रावच्छिन्नविशेषणतया । कादौ खत्वाद्यभावः श्रोत्रावच्छिन्नसमवेतविशेषणतया । एवं कत्वाद्यवच्छिन्नाभावे गत्वाभावादिकं श्रोत्रावच्छिन्नविशेषणविशेषणतया । एवं घटाभावादौ पटाभावः चक्षुःसंयुक्तविशेषणविशेषणतया । एवमन्यदप्यूहम् । तथापि विशेषणतात्वरूपेणैव सा गण्यते । अन्यथा षोढा सन्निकर्ष इति प्राचां प्रवादो व्याहन्येतेति ।

यदि स्यादुपलभ्येति । अत्राभावप्रत्यक्षे योग्यानुलपब्धिः कारणम् । तथाहि । भूतलादौ घटादिज्ञाने ज्ञाते घटाभावादिकं न ज्ञायते । तेनाभावोपलम्भे प्रतियोग्युपलम्भाभावः कारणम् । तत्र योग्यताप्यपेक्षिता सा च प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपा । तदर्थश्च प्रतियोगिनो घटादेः सत्त्वप्रसक्त्या प्रसञ्जित उपलम्भरूपः प्रतियोगी यस्य सोऽभावप्रत्यक्षे हेतुः । तथाहि । यत्रालोकसंयोगादिकं वर्तते तत्र यद्यत्र घटः स्यात्तर्हि उपलभ्येतेत्यापादयितुं शक्यते । तत्र घटाभावादिप्रत्यक्षं भवति । अन्धकारे तु नापादयितुं शक्यते । तेन घटाभावादेरन्धकारे न चाक्षुषप्रत्यक्षम्, स्पार्शनप्रत्यक्षं तु भवत्येव, आलोकसंयोगं विनापि स्पार्शनप्रत्यक्षस्यापादयितुं शक्यत्वात् । गुरुत्वादिकं यदयोग्यं तदभावस्तु न प्रत्यक्षस्तत्र गुरुत्वादिप्र

---

मुक्तावलीमयूखः ।

समवायो न प्रत्यक्षइति । घटाकाशसंयोगस्य प्रत्यक्षवारणाय सम्बन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुतेति तेषामभिप्रायः । नैयायिकास्तु संयोगप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुतेति स्वीकारेणोक्तदोषवारणसम्भवात् समवायस्य प्रत्यक्षत्वमेवाभ्युपगच्छन्ति ।

स्वसंयुक्तविशेषणतयेति । विशेषणता च स्वरूपसम्बन्धविशेषः । स्वं चक्षुः तत्संयुक्तं भूतलं तद्विशेषणता घटाभावे घटाभाववद्भूतलमिति ज्ञाने घटाभावस्य विशेषणत्वात् ।

स्वसंयुक्तसमवेतविशेषणतयेति । स्वं चक्षुः तत्संयुक्तो घटः तत्समवेता संख्या तद् विशेषणता रूपाभावे ।

स्वसंयुक्तसमवेतसमवेतविशेषणतयेति । स्वं चक्षुः तत्संयुक्तो घटस्तत्समवेता एकत्वादिसंख्या तत्समवेतं संख्यात्वादिकं तद्विशेषणता रूपाभावे ।

योग्यानुपलब्धिरिति । योग्या चासौ अनुपलब्धिरिति विग्रहः ।

स्यक्षस्यापादयितुमशक्यत्वात् । वायौ रूपाभावः । पाषाणे सौरभाभावः । गुडे तिक्ताभावः । श्रोत्रे शब्दाभावः । आत्मनि सुखाभावः । एवमादयस्तत्तदिन्द्रियैर्गृह्यन्ते तत्तत्प्रत्यक्षस्यापादयितुं शक्यत्वात् । संसर्गाभावप्रत्यक्षे प्रतियोगिनी योग्यता । अन्योन्याभावप्रत्यक्षे त्वधिकरणयोग्यताऽपेक्षिता । अतः स्तम्भादौ पिशाचादिभेदोऽपि चक्षुषा गृह्यत एव ॥५९॥६०॥६१॥६२॥

एवं प्रत्यक्षं लौकिकालौकिकभेदेन द्विविधम् । तत्र लौकिकप्रत्यक्षे षोढा संनिकर्षो वर्णितः । अलौकिकसन्निकर्षस्त्विदानीमुच्यते—

अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्तितः ।
सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा ॥ ६३ ॥

अलौकिकस्त्विवति । व्यापारः सन्निकर्षः । सामान्यलक्षण इति सामान्यं लक्षणं यस्येत्यर्थः ॥ ६३ ॥

अत्र लक्षणपदेन यदि स्वरूपमुच्यते तदा सामान्यस्वरूपा प्रत्यासत्तिरित्यर्थो लभ्यते । तच्चेन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतं बोध्यम् । तथाहि यत्रेन्द्रियसंयुक्तो धूमादिस्तद्विशेष्यकं धूम इति ज्ञानं यत्र जातं तत्र ज्ञाने धूमत्वं प्रकारः तत्र धूमत्वेन सन्निकर्षेण धूमा इत्येवंरूपं सकलधूमविषयकं ज्ञानं जायते । अत्र यदीन्द्रियसंबद्धमित्येवोच्यते तदा यत्र धूलीपटले धूमत्वभ्रमानन्तरं सकलधूमविषयकं ज्ञानं न स्यात् तत्र धूमत्वेन सहेन्द्रियसम्बन्धाभावात् । मन्मते तु इन्द्रियसम्बद्धं धूलीपटलं तद्विशेष्यकं धूम इति ज्ञानम्, तत्र प्रकारीभूतं धूमत्वं प्रत्यासत्तिः । इन्द्रियसम्बन्धश्च लौकिको ग्राह्यः । इदं च बहिरिन्द्रियस्थले । मानसस्थले तु ज्ञानप्रकारीभूतं सामान्यमात्रं प्रत्यासत्तिः ॥

परन्तु समानानां भावः सामान्यम् । तच्च क्वचिन्नित्यं धूमत्वादि, क्वचिच्चानित्यं घटादि । यत्रैको घटः संयोगेन भूतले, समवायेन कपाले ज्ञातस्तदन्तरं सर्वेषामेव तद्घटवतां भूतलादीनां कपालादीनां वा ज्ञानं भवति ।

---

मुक्तावलीमयूखः ।

गुरुत्वादिकमिति । नन्विदमयुक्तं पिशाचत्वादिजातेरयोग्यत्वेऽपि तदभावस्य स्तम्भादौ प्रत्यक्षत्वाङ्गीकरादिति चेन्न । गुरुत्वादिकमित्यादिपदस्य तादात्म्येन प्रत्यक्षप्रतिबन्धकजातिभिन्नसामान्याभावपरतयाऽदोषात् । तथापि पिशाचत्वजातिः स्वप्रत्यक्षं प्रति तादात्म्येन न प्रतिबन्धिका पिशाचत्वस्य क्रियाजातियोग्यवृत्तिरित्यादिना अयोग्यवृत्तित्वेन अयोग्यत्वस्य पूर्वमुक्ततया तत्प्रत्यक्षस्यापादानासंभवेन तस्य प्रत्यक्षप्रतिबन्धकत्वकल्पने बीजाभावात् ।

पिशाचादिभेदेति । पिशाचे स्तम्भभेदस्य च न प्रत्यक्षत्वं पिशाचरूपस्य भेदाधिकरणस्यायोग्यत्वादिति बोध्यम् ।

तत्र लक्षणपदेनेति । ननु सामान्यं लक्षणं स्वरूपं यस्य स सामान्यलक्षणो व्यापार इति स्वीकारे सामान्यरूपा प्रत्यासत्तिरिति लभ्यते । सामान्यं चेन्द्रियसम्बद्धविशेष्यकज्ञा-

तत्रेदं बोध्यम् । परन्तु सामान्यं येन सम्बन्धेन ज्ञायते तेन सम्बन्धेनाधिकरणानां प्रत्यासत्तिः । किं तु यत्र तद्घटनाशान्तरं तद्घटवतः स्मरणं जातं तत्र सामान्यलक्षणया सर्वेषां तद्घटवतां भानं न स्यात् सामान्यस्य तदानीमभावात् । किंचेन्द्रियसंबद्धविशेष्यकं घट इति ज्ञानं यत्रजातं तत्र परेद्दिने इन्द्रियं संबन्धं विनापिता दृशज्ञानप्रकारीभूतसामान्यस्य सत्त्वात्तादृशज्ञानं कुतो न जायते, तस्मात्सामान्यविषयकं ज्ञानं प्रत्यासत्तिर्न तु सामान्यमित्याह—

आसत्तिराश्रयाणां तु सामान्यज्ञानमिष्यते ।

आसत्तिः प्रत्यासत्तिरित्यर्थः । तथाच सामान्यलक्षण इत्यत्र लक्षणशब्दस्य विषयोऽर्थः । तेन सामान्यविषयकं ज्ञानं प्रत्यासत्तिरित्यर्थो लभ्यते ।

ननु चक्षुःसंयोगादिकं विनापि सामान्यज्ञानं यत्र वर्तते तत्रसकलघटादीनां चाक्षुषादिप्रत्यक्षं स्यादत आह—

तदिन्द्रियजतद्धर्मबोधसामग्र्यपेक्ष्यते ॥ ६४ ॥

तदिति । अस्यार्थः—यदा वहिरिन्द्रियेण सामान्यलक्षणया ज्ञानं जननीयं तदा यत्किंचिद्धर्मिणि तत्सामान्यस्य तदिन्द्रियजन्यज्ञानस्य सामग्री अपेक्षिता । सा च सामग्री चक्षुःसंयोगालोकसंयोगादिकम् । तेनान्धकारादौ चक्षुरादिना तादृशज्ञानं न जायते ॥ ६४ ॥

ननु ज्ञानलक्षणा प्रत्यासत्तिर्यदि ज्ञानरूपा सामान्यलक्षणापि ज्ञानरूपा तदा तयोर्भेदो न स्यादत आह—

विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः ।

सामान्यलक्षणा प्रत्यासत्तिर्हि तदाश्रयस्य ज्ञानं जनयति । ज्ञानलक्षणा प्रत्यासत्तिस्तु यद्विषयकं ज्ञानं तस्यैव प्रत्यासत्तिरिति ।

अत्रायमर्थः । प्रत्यक्षे सन्निकर्षं विना भानं सम्भवति । तथा च सामान्यलक्षणां विना धूमत्वेन सकलधूमानां वह्नित्वेन सकलवह्नीनां च भानं कथं भवेत्तदर्थं सामान्यलक्षणा स्वीक्रियते ।

न च सकलवह्निधूमभानाभावे कात्ततिरिति वाच्यं, प्रत्यक्षधूमे वह्नि-

---

मुक्तावलीमयूखः ।

नप्रकारीभूतं बोध्यम् तथाच यत्रेन्द्रियसंयुक्तो धूमस्तद्विशेष्यकं ज्ञानं धूम इति तत्र ज्ञाने-प्रकारीभूतं धूमत्वं तेन सन्निकर्षेण सकलधूमविषयकं ज्ञानं जायते इति अत्र सामान्यपदेन समानानां भावः सामान्यमिति व्युत्पत्या धर्ममात्रं गृह्यते न तु जातिमात्रम् एवं च यत्र तद्घटनाशानन्तरं तद्घटवतः स्मरणं जातं तत्र सामान्यलक्षणसन्निकर्षेण सर्वेषां तद्घटवतां स्मरणं न स्यात् घटरूपसामान्यस्य तदानीमभावादिति चेन्न सामान्यं लक्षणं विषयो यस्य स सामान्यलक्षण इति स्वीकारेण सामान्यज्ञानस्वरूपप्रत्यासत्तेर्लाभेन घटरूपसामान्यस्याभावेपि तज्ज्ञानरूपप्रत्यासत्तेः सत्त्वेनादोषादिति संक्षेपः ।

ननु यदि सामान्यलक्षणाप्रत्यासत्तिर्ज्ञानरूपा ज्ञानलक्षणापि ज्ञानरूपा तदा तयोर्भेदो-न स्यादिति चेन्न सामान्यलक्षणाप्रत्यासत्तिर्हि सामान्याश्रयस्य ज्ञानं जनयति ज्ञानलक्षणा तु यद्विषयकं ज्ञानं तस्यैव प्रत्यासत्तिरिति तयोर्भेदात् ।

सम्बन्धस्य गृहीतत्वादन्यधूमस्य चानुपस्थितत्वाद् धूमो वह्निव्याप्यो न वेति संशयानुपपत्तेः। मन्मते तु सामान्यलक्षणया सकलधूमोपस्थितौ कालान्तरीयदेशान्तरीधूमे वह्निव्याप्यत्वसंदेहः सम्भवति।

न च सामान्यलक्षणस्वीकारे प्रमेयत्वेन सकलप्रमेयज्ञाने जाते सार्वज्ञ्यापत्तिरिति वाच्यं, प्रमेयत्वेन सकलप्रमेयज्ञाने जातेऽपि विशिष्य सकलपदार्थानामज्ञातत्वेन सार्वज्ञ्याभावात्।

एवं ज्ञानलक्षणाया अस्वीकारे सुरभि चन्दनमिति ज्ञाने सौरभस्य भानं कथं स्यात्। यद्यपि सामान्यलक्षणयापि सौरभभानं संभवति तथापि सौरभत्वस्य भानं ज्ञानलक्षणया। एवं यत्र धूमत्वेन धूलीपटलं ज्ञातं तत्र धूलीपटलस्यानुव्यवसाये भानं ज्ञानलक्षणया।

**योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः।**

योगज इति। योगाभ्यासजनितो धर्मविशेषः श्रुतिस्मृतिपुराणादिप्रतिपाद्य इत्यर्थः। युक्तयुञ्जानभेदत इति। युक्तायुञ्जानरूपयोगिद्वैविध्याद्धर्मस्य द्वैविध्यमिति भावः॥ ६५॥

**युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः।**

युक्तस्य तावद्योगजधर्मसहायेन मनसा आकाशपरमाण्वादिनिखिलपदार्थगोचरं ज्ञानं सर्वदैव भवितुमर्हति। द्वितीयस्य चिन्ताविशेषोऽपि सहकारीति।

इति श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचितायां
सिद्धान्तमुक्तावल्यां प्रत्यक्षखण्डम्।

---

मुक्तावलीमयूखः।

ननु सामान्यलक्षणा प्रत्यासत्तिः किमर्थमङ्गीक्रियत इति चेच्छ्रूयताम् यदि सामान्यलक्षणा प्रत्यासत्तिर्न स्यात् तदा प्रत्यक्षधूमे वह्निसम्बन्धस्य गृहीतत्वात् धूमान्तरस्य चानुपस्थितत्वात् धूमो वह्निव्याप्यो न वेति संदेहो न स्यात् मम तु सामान्यलक्षणया धूमत्वेन सकलधूमानां वह्नित्वेन सकलवह्नीनां च ज्ञाने जाते कालान्तरीयदेशान्तरीयधूमे वह्निव्याप्यत्वसंदेहः सम्भवतीति।

ननु ज्ञानलक्षणाप्रत्यासत्तेः किं प्रयोजनमिति चेदुच्यते ज्ञानलक्षणाया अस्वीकारे सुरभि चन्दनमिति ज्ञाने सौरभस्य भानं न स्यात् चक्षुषश्चन्दनेन सन्निकर्षस्य सत्त्वेपि सौरभेण सन्निकर्षाभावात्। नच चक्षुषश्चन्दनेन संयोगसन्निकर्षसत्त्वे सौरभेणापि स्वसंयुक्तसमवायसन्निकर्षोऽस्त्येवेति कथमेतदिति वाच्यम् योग्यचक्षुः सन्निकर्षाभावेन सौरभस्य चाक्षुषं न स्यादित्याशयात्।

यद्यपि सौरभस्य भानं सामान्यलक्षणयापि सम्भवति तथापि सौरभत्वस्य भानं ज्ञानलक्षणयैव एवं च सौरभांशे चक्षुषोऽलौकिकस्सन्निकर्षः चन्दनांशे च लौकिकः सन्निकर्ष इति बोध्यम्। ज्ञानलक्षणासंनिकर्षश्च स्वसंयुक्तमनः संयुक्तात्मसमवेतज्ञानविषयत्वरूपः स्वं चक्षुः तत्संयुक्तं मनः तत्संयुक्त आत्मा तत्समवेतं सौरभज्ञानं तद्विषयत्वं सौरभ इति तत्वम्।

रामेश्वरतनुजन्मसूर्यनारायणोदिते। मुक्तावलीमयूखेऽस्मिन् प्रत्यक्षं पूर्णतामगात्॥

इति न्यायव्याकरणाचार्य सूर्यनारायणशुक्लरचिते मुक्तावलीमयूखे प्रत्यक्षखण्डं पूर्णम्।

श्रीहरिकृष्णनिबन्धमणिमालायाः

पञ्चमो (५) मणिः ।

श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचिता

# कारिकावली

काशीस्थ श्री जो. म. गोयनकासंस्कृतमहाविद्यालया-
ध्यापक साहित्योपाध्याय न्यायव्याकरणाचार्य
श्रीसूर्यनारायणशुक्लरचित मयूखोद्भासित

सिद्धान्तमुक्तावलीसहिता ।

तस्याः

( अनुमानशब्दखण्डाद्यात्मको द्वितीयोभागः )

प्रकाशकः—

श्रीहरिकृष्णनिबन्धभवनम्,

बनारस सिटी ।

सं० १९८७

# परीक्षापाठ्य-पुस्तक-सूचीपत्रम् ।

१ छन्दःकौमुदी । प्रथमपरीक्षापाठ्यनिर्द्धारितछन्दःसंग्रहपुस्तकम् । हिन्दी भाषा टीका बृहत् भूमिका परीक्षोपयोगि प्रश्नपत्र सहितः । (द्वितीय संस्करण) ।=)

२ गणितकौमुदी । प्रथमपरीक्षापाठ्यनिर्द्धारितगणितसंग्रह पुस्तकम् । हिन्दी भाषा टीका उदाहरण प्रश्नप्रत्र सहिता । (द्वितीय संस्करण) । ।=)

३ मूलरामायण-भारतीयशीलनिरूपणाध्याय सहितः । (सुधानाम्नि व्याख्या) अन्वय-व्याख्या-समास-व्याकरण-वाच्य-परिवर्तन-कोश-सारार्थ-भाषार्थ-परीक्षोपयोगि प्रश्नसंग्रह सहित । ।=)

४ रघुवंशम् । म. म. मल्लिनाथकृत टीका टीप्पणी सहितम् संपूर्णम् । १)

५ रघुवंशम् । म. म. मल्लिनाथकृत टीका टीप्पणीःसहितम् । १ से ५ सर्ग । ।)

६ रघुवंशम् । ( सुधानाम्नि व्याख्या ) अन्वय-व्याख्या-व्याकरण-समास-कोश-सारार्थ-भाषार्थ-संक्षिप्तकथा-पौराणकीयकथा परीक्षोपयोगि प्रश्नपत्र तथा मल्लिनाथकृत टीका सहितम् । १ से ४ सर्गः १।)

१ से ५ सर्गः १॥)

६ से १० सर्गः १॥)

८ पञ्चतन्त्रम् । परीक्षोपयोगि टिप्पणी सहितम् । सम्पूर्णम् । ॥)

९ पञ्चतन्त्रम् । पञ्चमतन्त्रम् (अपरीक्षित कारकम् ) परीक्षोपयोगि टीप्पणी सहितम् =)

१० पञ्चतन्त्रम् । पञ्चमतन्त्रम् ( अपरीक्षितकारकम् । ) भाषाटीकया, परीक्षोपयोगिटिप्पण्या, श्लोकानां संस्कृतव्याख्या, संस्कृत हिन्दी-भाषाबद्धेन संक्षिप्तकथासारांशेन, कथालभ्योपदेशेन, प्रश्नपत्रेण, तथा बृहद्भूमिकया च सहितम् । ।-)

*११ पञ्चतन्त्रम् । परीक्षोपयोगि संस्कृत टीका टिप्पणी सहितम् । ...

*१२ पञ्चतन्त्रम् । परीक्षोपयोगि हिन्दी भाषा टीका सहितम् । ...

१३ किरातार्जुनीयम् । (सुधानाम्नि व्याख्या) परीक्षोपयोगि अन्वय-व्याख्या-समास-व्याकरण-वाच्यपरिवर्तन-कोश-सारार्थ-भाषार्थ-मल्लिनाथ कृत टीका तथा प्रश्नपत्र सहितम् । १ से ३ सर्गः ॥।)

१४ किरातार्जुनीयम् । मल्लिनाथी-भावार्थदीपिनीव्याख्याद्वयोपेतम् । सर्गाः १ से ३ ।=)

१५ तर्कसंग्रहः । न्यायबोधिनी-पदकृत्य-विरला टीका त्रयोपेतः । सटीप्पण । ।=)

*१६ मेघदूतम् । मल्लिनाथकृत सञ्जीविनी, चारित्रवर्द्धिनी तथा परीक्षोपयोगि भावप्रबोधिनी टीकात्रयोपेतम् । ...

१७ चन्द्रालोकः । परीक्षोपयोगि "शरदागम" व्याख्या टिप्पणी सहितः । ॥=)

१८ शिशुपालवधम् । मल्लिनाथी टीका तथा वल्लभदेव कृत संदेहविषौषधिपरीक्षोपयोगि व्याख्या सहितम् । १से२ सर्गः ॥) १ से ३ सर्गः । ॥।)

१९ वृत्तरत्नाकरः । नारायणभट्टकृत नारायणी टीका तथा वैद्यनाथशास्त्री वरकले कृत परीक्षोपयोगि टिप्पणी उदाहरण तथा श्रुतबोध-छन्दोमंजरी-सुवृत्तितिलक सहितः । १॥)

---

* इस संकेत के ग्रन्थ प्रायः तैयार ही हैं जो अत्यन्त शीघ्र विक्रयार्थ प्रस्तुत होंगे ।

---

प्राप्तिस्थानम्-श्रीहरिकृष्णनिबन्धभवनम्, बनारस सिटी ।

* श्रीगणेशायनमः *

# मयूखसहितमुक्तावलीसमेता

# कारिकावली ।

## अनुमानखण्डः ।

---

न्यायसिद्धान्तमुक्तावली ।

व्यापारस्तु परामर्शः, करणं व्याप्तिधीर्भवेत् ॥ ६६ ॥
अनुमायां, ज्ञायमानं लिङ्गं तु करणं न हि ।
अनागतादिलिङ्गेन न स्यादनुमितिस्तदा ॥ ६७ ॥

अनुमितिं व्युत्पादयति । व्यापारस्त्विति । अनुमितौ व्याप्तिज्ञानं करणं, परामर्शो व्यापारः ।

तथा हि—येन पुरुषेण महानसादौ धूमे वह्नेर्व्याप्तिर्गृहीता, पश्चात् स एव पुरुषः क्व चित् पर्वतादावविच्छिन्नमूलां धूमरेखां पश्यति, तदनन्तरं 'धूमो वह्निव्याप्य' इत्येवंरूपं व्याप्तिस्मरणं तस्य भवति, पश्चाच्च वह्निव्याप्यधूमवानयमिति ज्ञानं, स एव परामर्श इत्युच्यते । तदनन्तरं पर्वतो वह्निमानित्यनुमितिर्जायते ।

अत्र प्राचीनास्तु व्याप्यत्वेन ज्ञायमानं लिङ्गमनुमितिकरणमिति वदन्ति, तद् दूषयति । ज्ञायमानमिति । लिङ्गस्याऽनुमित्यकरणत्वे युक्तिमाह । अनागतादीति । यद्यनुमितौ लिङ्गं करणं स्यात्, तदाऽनागतेन लिङ्गेन, विनष्टेन, चाऽनुमितिर्न स्यात्, अनुमितिकरणस्य तदानीमभावादिति ॥ ६६ ॥ ६७ ॥

मुक्तावलीमयूखः ।

व्यापार इति । तज्जन्यत्वे सति तज्जन्यजनकत्वं व्यापारत्वम् परामर्शो हि व्याप्तिज्ञानजन्यः व्याप्तिज्ञानजन्यानुमितिजनकश्चेति भवति तस्य व्याप्तिज्ञानव्यापारत्वमिति ।

अनागतेनेति । तथा च इयं शाला भाविवह्निमती भाविधूमात्, इयं शाला अतीतवह्निमती अतीतधूमात्, इति अनागतविनष्टाभ्यां लिङ्गाभ्यामनुमितिर्न स्यात् तदानीं लिङ्गस्य धूमस्याभावात् । मम तु धूमस्याभावेऽपि धूमज्ञानस्य सत्वान्न दोष इति भावः ॥ ६६ ॥ ६७ ॥

न्यायसिद्धान्तमुक्तावली।

व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते ।

व्याप्यस्येति। व्याप्तिविशिष्टस्य पक्षेण सह वैशिष्ट्यावगाहिज्ञानमनुमितौ जनकं, तच्च 'पक्षे व्याप्य' इति ज्ञानं, 'पक्षो व्याप्यवान्' इति ज्ञानं वा, अनुमितिस्तु 'पक्षे व्याप्य' इति ज्ञानात् 'पक्षे साध्यम्' इत्याकारिका, 'पक्षो व्याप्यवान्' इति ज्ञानात् 'पक्षः साध्यवान्' इत्याकारिका।

मुक्तावलीमयूखः।

अनुमितिस्त्विति। अयं भावः द्विविधादपि परामर्शात् 'पक्षः साध्यवान्' इत्येवमाकारानुमितिस्वीकारे यदा व्याप्यप्रकारकपक्षविशेष्यकपरामर्शादनुमितिर्जाता तदा पक्षप्रकारकव्याप्यविशेष्यकः परामर्शो नास्ति यदा च पक्षप्रकारकव्याप्यविशेष्यकपरामर्शादनुमितिर्जाता तदा व्याप्यप्रकारकपक्षविशेष्यकः परामर्शो नास्तीति कारणाभावे कार्योत्पादरूपव्यतिरेकव्यभिचारसत्त्वात् कस्यापि परामर्शस्य कारणत्वं न स्यात् अतः 'पक्षो व्याप्यवान्' इत्याकारकपक्षविशेष्यकपरामर्शात् पक्षविशेष्यिका 'पक्षः साध्यवान्' इत्याकारिका, 'पक्षे व्याप्य' इति व्याप्यविशेष्यकपरामर्शात् साध्यविशेष्यिका 'पक्षे साध्यम्' इत्याकारिकाऽनुमितिः स्वीक्रियते एवं च एकधर्मावच्छिन्नकार्यं प्रति यदानेकधर्मावच्छिन्नस्य कारणता तदा व्यतिरेकव्यभिचारः प्रकृते च साध्यप्रकारकपक्षविशेष्यकानुमितित्वावच्छिन्नं प्रति व्याप्यप्रकारकपक्षविशेष्यकपरामर्शत्वावच्छिन्नस्य; पक्षप्रकारकसाध्यविशेष्यकानुमितित्वावच्छिन्नं प्रति च पक्षप्रकारकव्याप्यविशेष्यकपरामर्शत्वावच्छिन्नस्य कारणतया एकधर्मावच्छिन्नकार्यं प्रति अनेकधर्मावच्छिन्नस्य कारणस्याभावान्न व्यतिरेकव्यभिचारः।

एतदुक्तं भवति 'वह्निव्याप्यधूमवान् पर्वतः' इति परामर्शात् 'पर्वतो वह्निमान्' इत्याकारानुमितिः। 'पर्वते वह्निव्याप्यो धूमः' इति परामर्शात् 'पर्वते वह्निः' इत्याकारानुमितिर्जायते इति।

ननु व्याप्यप्रकारकपक्षविशेष्यकपक्षप्रकारकव्याप्यविशेष्यकान्यतरपरामर्शत्वेन पक्षः साध्यवानित्याकारानुमितिं प्रति कारणतास्वीकारेण अन्यतरपरामर्शत्वावच्छिन्नकारणस्य सत्त्वान्न व्यतिरेकव्यभिचारः कारणतावच्छेदकावच्छिन्नप्रतियोगिताककारणाभावे कार्यतावच्छेदकावच्छिन्नकार्योत्पादस्यैव व्यतिरेकव्यभिचाररूपत्वादिति चेन्न—तद्भिन्नत्वे सति तद्भेदवान् यः तत्प्रतियोगिकभेदवत्त्वम् अन्यतरत्वम् यथा घटभिन्नत्वे सति पटभेदवद् एतद्द्वयातिरिक्तं जगन्मात्रं तद्भिन्नत्वमेतद्द्वये इति इदमेव घटपटान्यतरत्वं नाम एवं पक्षविशेष्यकपरामर्शभिन्नत्वे सति व्याप्यविशेष्यकपरामर्शभिन्नं एतद्द्वयातिरिक्तं जगन्मात्रं तद्भिन्नत्वं द्विविधपरामर्शे इति इदमेव पक्षविशेष्यकव्याप्यविशेष्यकपरामर्शान्यतरत्वमिति एवं चान्यतरत्वरूपकारणतावच्छेदककुक्षौ जगतः प्रवेशेन विशेष्यविशेषणभावव्यत्यासेन व्याप्यविशेष्यकपरामर्शभिन्नत्वे सति पक्षविशेष्यकपरामर्शभिन्नो यः तद्भिन्न-

न्यायसिद्धान्तमुक्तावली ।

द्विविधादपि परामर्शात् पक्षः साध्यवानित्येवाऽनुमितिरित्यन्ये । ननु 'वह्निव्याप्यधूमवान् पर्वत' इति ज्ञानं विनाऽपि यत्र पर्वतो धूमवानिति प्रत्यक्षं, ततो 'वह्निव्याप्यो धूम' इति व्याप्तिस्मरणं, तत्र ज्ञानद्वयादेवाऽनुमितेर्दर्शनात् व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानं न सर्वत्र कारणं, किन्तु व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन कारणत्वस्याऽऽव-

मुक्तावलीमयूखः ।

त्वरूपस्य पक्षविशेष्यकपरामर्शभिन्नत्वे सति व्याप्यविशेष्यकपरामर्शभिन्नो यः तत्प्रतियोगिकभेदवत्त्वरूपस्य च अन्यतरत्वस्य विनिगमनाविरहेण कारणतावच्छेदकत्वेन गौरवेणान्यतरत्वेन कारणतायाः स्वीकर्तुमयोग्यत्वादिति ।

द्विविधादपीति । ननु द्विविधादपि परामर्शादेकविधानुमितिस्वीकारे व्यतिरेकव्यभिचार इति चेन्न व्याप्यप्रकारकपक्षविशेष्यकपरामर्शाव्यवहितोत्तरक्षणजायमानपक्षः साध्यवानित्याकारकानुमितित्वावच्छिन्नं प्रति व्याप्यप्रकारकपक्षविशेष्यकपरामर्शस्य कारणता, एवं पक्षप्रकारकव्याप्यविशेष्यकपरामर्शाव्यवहितोत्तरक्षणजायमान 'पक्षः साध्यवान्' इत्याकारकानुमितित्वावच्छिन्नं प्रति पक्षप्रकारकव्याप्यविशेष्यकपरामर्शस्य काणता इति स्वीकारेण व्यतिरेकव्यभिचाराभावात् ।

वस्तुतस्तु एतदपेक्षयापि लाघवात् पक्षनिष्ठविषयतानिरूपितव्याप्यनिष्ठविषयताकपरामर्शत्वेन द्विविधपरामर्शस्य 'पक्षः साध्यवान्' इत्याकारानुमितिं प्रति कारणतास्वीकाराद् व्यतिरेकव्यभिचारवारणं बोध्यम् द्विविधपरामर्शात् पक्षविशेष्यकसाध्यविशेष्यकानुमितिद्वयस्वीकारस्तु नोचितः अनुभवविरोधादिति भावः ।

केचित्तु अनुभवानुरोधेन पक्षविशेष्यकादेव परामर्शादनुमितिर्जायते न तु व्याप्यविशेष्यकात् अत एव वह्निव्याप्यधूमवांश्चायमित्याकारकः पक्षविशेष्यक एवोपनय इति वदन्ति ।

मीमांसकः शङ्कते नन्विति । इदं हि तेषांमतम् यन्महानसादौ वह्निसहचरितधूमदर्शनेन 'धूमो वह्निव्याप्य' इति व्याप्तिग्रहे जाते पश्चाद् 'पर्वतो धूमवान्' इति पक्षधर्मताज्ञानात् 'पर्वतो वह्निमान्' इत्यनुमितिर्जायते व्याप्त्यनुभवस्यानुमितिं प्रति कारणता तु संस्कारद्वारा ।

न च संस्कारजन्यत्वेन अनुमितेः स्मृतित्वापत्तिरिति वाच्यम् संस्कारजन्यत्वस्य संस्कारध्वंससाधारण्येन स्मृतित्वाप्रयोजकत्वादिति । न्यायमते तु महानसादौ वह्निसहचरितधूमदर्शनेन 'धूमो वह्निव्याप्य' इति व्याप्त्यनुभवः ततः 'पर्वतो धूमवान्' इति पक्षवृत्तिताज्ञानं ततः व्याप्तिस्मरणं ततः परामर्शः ततोऽनुमितिरिति ।

व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानमिति । ज्ञानाकारश्च 'वह्निव्याप्यधूमवान्

